# रामगीतगोविन्दम्

[रागकाव्यम्]

[ हनुमान् त्रिपाठिकृतटीकासंवलितम्

रचयिता

श्रीजयदेवः

सम्पादक

प्रभातशास्त्री

# RĀMAGĪTAGOVINDAM

[ RĀGAKĀVYAM ]

*By*

KAVI JAYADEVA

[ With Commentary of Hanuman Tripathi ]

*Edited by*

**PRABHĀT ŚASTRI**

माननीयश्रीहेमवतीनन्दनबहुगुणाकरकमलयोः
सादरम्



जयदेवाऽऽननकाननविकासिलतिकाऽऽवलोकन्दम् ।
सुरवाणीकरपल्लवमुखरितवीणारसस्यन्दम् ।।
एतत्प्रभातदत्तं विन्दतु नयनाऽम्बुजाऽऽनन्दम् ।
हेमवतीनन्दन! तव काव्यं श्रीरामगीतगोविन्दम् ।।

प्रभातशास्त्री

# भूमिका



महाकविकालिदासकृत'मेघदूतस्य' पीयूषवर्षिककविकोकिलजयदेवविहित 'गीतगोविन्दस्य' चाध्ययनानुशीलनाभ्या सस्कृतस्य सर्वेऽपि भावुका कवय प्रभाविता अभवन् । ताभ्याञ्च सर्वे त उत्प्रेरणामपि जगृहु । परिणामतोऽत्यधिकसख्याया सस्कृतभाषाया दूतकाव्याना, रागकाव्यानाञ्च रचना समभूत् । तेषु धोयीमहाकवे 'पवनदूतेन' प्रसिद्धालङ्कारिकरसमञ्जरीप्रणेतुर्भानुदत्तस्य 'गीतगौरीपति' काव्येन च सस्कृतसमाजो विशेषरूपेण परिचित एवास्ते। शेषाभि कृतिभिर्नहीव परिचितोऽस्ति । अस्य कारणमेतदास्ते—यदगीतकाव्याना, दूतकाव्यानाञ्च परम्पराया लिखिता अधिकाशा कृतयोऽद्यावध्यप्रकाशिता सन्ति तथा या प्रकाशिताश्चापि वर्तन्ते तासामध्ययन प्रति सहृदय सुधीसमाजोऽत्युदासीनता भजते ।

प्रस्तुता कृती 'रामगीतगोविन्दम्' जयदेवकृतगीतगोविन्दकाव्यस्य परम्पराया लिखित सस्कृतस्य सरस रागकाव्यमास्ते । अस्य लेखकस्याऽभिधान जयदेव एवास्ति ।[1] सस्कृते जयदेवनामानोऽनेके ग्रन्थकारा समभूवन् । प्रसिद्ध शर्मण्यदेशीयो विद्वान्-आफ्रेक्टनामा स्वकीये 'कैटलोगस-कैटलोगरम्' इत्याख्ये

---

१—१—जयदेवदीक्षित –नृसिहपुत्र., बलभद्रशुक्लस्य सरक्षक , २—जयदेवपण्डित -–भगीरथमेघगुरु., ३—जयदेव – दार्शनिकरुचिदत्तपुत्र , ४—जयदेववागीश —कविचन्द्रपुत्र , विष्णुरामपिता, ५—जयदेव —अलङ्कारशतकरचयिता, ६—जयदेव –त्रिलोचनदासद्वारोद्धृत , ७—जयदेव –गगाष्टपदीकाव्य–कर्ता, ८—जयदेव —नेमिना, जनार्दनेन चोद्धृतः ९—जयदेव —पक्षधरोपनामक , हरिमिश्रशिष्यो भ्रातृजश्च, १०—जयदेवकवि —त्रिपुरसुन्दरीस्तोत्रप्रणेता, ११—जयदेव –प्रश्ननिधेर्लेखक , १२–जयदेव -रसामृतरचयिता, १३–जयदेव.–नृसिहपुत्र १४—जयदेव —भोजदेवस्य तथा रामादेव्या पुत्र , गीतगोविन्दप्रणेता, १५—जयदेव.—महादेवस्य, सुमित्रायाश्च पुत्र , चन्द्रालोकस्य तथा प्रसन्नराघवस्य कर्ता, १६— जयदेवपण्डित —कवेरुत्कलनरेशास्याश्रयी—अलङ्कारशेखरस्यैकस्मिश्छन्दसि चर्चित. । पृष्ठम् । १९९ तथा २०० । प्रथमो भाग ।

ग्रन्थसूचीपुस्तके जयदेवाभिधानाना षोडशग्रन्थकाराणा चर्चां विहितवानाऽऽस्ते। प्रस्तुता कृति आफ्रेक्टमहाशयो गीतगोविन्दलेखकस्य रचनारूपा प्रश्नवाचकेन चिह्नेन सहोल्लिलेख। अनेन कारणेन प्रस्तुत रागकाव्यममीषु षोडशग्रन्थकारेष्वन्यतमस्यैव कस्यचिद्वर्तते ? विषयेऽस्मिन् विचारविमर्शकरण नाम नाप्रासगिक स्यात्। रचयिताऽसौ काव्यस्य षष्ठे सर्गे [1] स्वनिवासस्थानस्य चर्चामकरोद्येन प्रतीयते यदय मिथिलाया निवासी आसीत् तथा च तत्रत्येन समस्तराजमण्डलेन समानित। स्वकीयाया अस्या कृतेर्निर्माणकालस्य तथा राज्ञो नाम्न उल्लेखमन्ये सस्कृतलेखका इवायमपि नो चकार। अनेन लेखकस्य जन्मस्थान मिथिलाऽऽस्ते—एतत्तु निर्विवाद सिद्ध्यति परन्तु कृतेर्निर्माणकालस्तथा तस्यैव साहाय्येन कृतिकारस्य जन्मकाल केवलमनुमानप्रमाणाधार निश्चेतव्यौ भवेताम्।

लेखकोऽसौ काव्यस्यास्य प्रथमसर्गेऽध्यात्मरामायणस्य, काकभुशुण्डिरामायणस्य हनुमन्नाटकस्य च चर्चां कृतवानास्ते। [2] तेनैतत् सिद्ध्यति यदिय रचना चतुर्दशशताब्द्या पूर्वकालीना कथमपि न भवितुमर्हति। यतो भारतीया विद्वासोऽध्यात्मरामायणस्य रचनाकाल १४०० ईसवीयवर्षत १६०० ईसवीयवर्षमध्ये मन्यन्ते। [3]

---

१—श्रीमद्विदेहनृपदेशविशेषवासो,
निःशेषभूमिपतिमण्डलमाननीय।
एतच्चकार वरगानरसप्रधान,
काव्य कविप्रकरमौलिविभूषण सत्॥
—रामगीतगोविन्दम्। सर्ग ६। श्लोक. ४।

२—वाल्मीकिनाऽऽद्यकविना शतकोटिसख्य,
रामायण विरचित शशिमौलिना च।
काकेन वायुतनयेन तथाऽपरेण,
किञ्चित्करोति जयदेवकविश्चरित्रम्॥
—रामगीतगोविन्दम्। सर्ग १। श्लोक ३।

३—पण्डितज्वालाप्रसादमिश्रोऽध्यात्मरामायणमुपपुराण तथा तुलनात्मिकया दृष्ट्या नवीना रचनामकथयत्।—डा भाण्डारकरो महाराष्ट्रियमहात्मन एकनाथस्य साक्ष्ये तामिमा रचनामाधुनिकी प्रोक्तवान् स चेमा रचना १४००—१६००शतकयोर्मध्यवर्तिनीं मेने। [डा. बदरीनारायणश्रीवास्तवलिखितम्—रामानन्दसम्प्रदाय-

एतेन निर्विवाद सिद्ध्यति यदसौ कृति–द्वादश्या शताब्द्या समुत्पन्नस्य[1] बंगीयनृपतेर्लक्ष्मणसेनस्य सभाकवे 'गीतगोविन्दस्य' प्रणेतुर्जयदेवस्य नहि भवितुमर्हतीति। शर्मण्यविदुष आफ्रेक्टमहोदयस्य केवल नामसाम्येन गीतगोविन्दकार जयदेवस्यैषा कृतिरस्तीति भ्रमो जातो भवेन्नाम।

मिथिलावादी किलैको भारतीयो विद्वान् प्रसन्नराघवस्य तथा चन्द्रालोकलेखकस्य जयदेवस्यैव रचना 'गीतगोविन्दं' चापि मन्यते[2] प्रसन्नराघवस्य प्रणेता मिथिलाप्रदेशवासी समभूदथवा विदर्भनिवासी, विषयेऽस्मिन् विदुषाम्मतैक्य नास्ति। अन्ये विद्वास प्रसिद्धस्य नैयायिकस्य पक्षधरमिश्रस्यान्यदभिधान जयदेव इति मत्वा तमेव हि प्रसन्नराघवस्य रचयितारं मन्यन्ते तथा चन्द्रालोकस्य लेखकमन्य जयदेव स्वीकुर्वन्ति[3]। डा कीथ प्रसन्नराघवकार जयदेव विदर्भदेशस्य कुण्डिनपुरस्य निवासिनं मन्यते[4] यस्याधार कदाचित् प्रसन्नराघवस्यैवच्छन्दोऽस्ति[5]। अस्या स्थितौ ममेद

स्तथा हिन्दीसाहित्ये तत्प्रभाव। पृष्ठम् १४३। पी. सी बागची: इण्ट्रोडक्शन अध्यात्मरामायणस्य। कलकत्ता १९३५।]

१—वेवरकृतभारतीयसाहित्यस्य इतिहास। पृष्ठम् २१०। सन् १९१४ ईसवीये वर्षे प्रकाशित।

२—समालोचकै सर्वथोपेक्षितोऽयं महाकवि। चन्द्रालोकरामगीतगोविन्दप्रसन्नराघवेतिग्रन्थत्रय विरच्य नि शेषभूमिपतिमण्डलमाननीयो बभूव इत्येव मन्मतम्।

[आरात प्रकाशिते संस्कृतपत्रे मागधे चतुर्थाङ्के आचार्यकमलाकान्तोपाध्यायस्य 'गीतपरम्पराया रामगीतगोविन्दम्' इति शीर्षको लेख।]

३—चत्वार श्रीजयदेवा—मुकुटव्याख्यातच्छन्द शास्त्रपुस्तकप्रणेता अभिनवगुप्तपादै स्मृत एक। पीयूषवर्षोपाधिक चन्द्रालोककर्ता द्वितीय। बंगवासीप्रसिद्धगीतगोविन्दगायकस्तृतीय। प्रसन्नराघवनाटकप्रणेता चिन्तामण्यालोकदर्शनग्रन्थकर्ता च सोदपुरीये दिगौनवशाम्बुनिधिशीत्तभानुर्मिथिलावासी पक्षधरमिश्रापरनामा चतुर्थ। [श्रीरामचन्द्रमिश्रलिखितप्रसन्नराघवभूमिकात।]

४—डा० कीथस्य 'संस्कृतनाटकम्'। पृष्ठम्। २५७ तथा २५८। [डा० उदयभानुसिंहस्य हिन्दी अनुवाद।]

५—कवीन्द्र कौण्डिन्य स तव जयदेव श्रवणयो-
रयासीदातिथ्य न किमिह महादेवतनय॥
—प्रसन्नराघवनाटकम्। अङ्क १। १४ श्लोक।

दृढ मत भवति यद्धि प्रस्तुता कृति —'रामगीतगीविन्दम्' नाटक
जयदेवस्य न भूत्वा सर्वेभ्योऽपि भिन्नस्य मिथिलाप्रदेशवासिन ,कस्यचि
रामभक्तस्य जयदेवस्यास्तीति । शैलीदृष्ट्यापि चानुशीलने कृते तदिद
यन्नाटककारो जयदेवोऽस्या कृतेर्लेखको भवितु न शक्नोति। प्रसन्नराघ
गद्यस्य पद्यस्य च भाषा, पदावली चात्यन्तमलकृता तथा यत्र
डम्बरपूर्णाऽपि चाऽऽस्ते । अतो विपरीत प्रस्तुताया कृतौ गीताना छन्दसामुभये
भाषा सर्वथा सरला सरसा सुबोधा चास्ते ।

इदानी 'रामगीतगोविन्दस्य' रचनाकालस्य प्रश्नोऽवशिष्यते । कवेरस्य स्थानं मिथिलाऽऽसीदेतत्तु काव्यस्यास्य षष्ठसर्गस्य चतुर्थश्लोकेन स्पष्ट भवति तेनैव ज्ञायते यद्धि कवेरस्य सामाजिकी स्थितिरादरणीया बभूव । तत्कालीनमिथिलाप्रदेशराजाना राजपरिषदि सम्मानितोऽभूत् । काव्यस्य शीलनेनाध्ययनेन च तस्य रचनाकालस्य विषये वय न कामपि प्राम सामग्रीमुपलभामहे । अस्या स्थितौ संस्कृतस्यान्येषा कवीनामिवास्य कृति सम्बन्धेऽपि चानुमानाश्रयग्रहण श्रेयस्करम् । प्रस्तुता कृतिर्जयदेवस्य गीतगो परम्पराया लिखिताऽऽस्ते, तथाप्यत्र तत्रे वाथवा कालिदासस्य कुमारसम्भ मर्यादाविहीनस्य शृगाररसस्य प्रयोगो नास्ति सजात । कविरसौ काव्ये क्वाऽपि जयदेवस्य राधाया इव मातु सीताया सौन्दर्यं व्यावर्णित तस्मादेव मयास्य कवेरभिधानेन सह प्राग् 'रामभक्त' इति विशेषण प्रयुक्त समग्रस्य काव्यस्य पठनादनन्तरमस्य कवेर्हृदय राम प्रति पवित्रश्रद्धा भक्त्यौतप्रोत प्रतीयते ।

नवम्या शताब्द्यामुत्पन्न सस्कृतस्य कवि कुमारदास कालिदासस्य सम्भवेन प्रभावितो भूत्वा स्वकीये 'जानकीहरण' महाकाव्ये[1] मर्यादापुरुषो

१ —स्व नितम्बमपवाहिताशुक कामिनी रहसि पश्यति प्रिये ।
प्रार्थनामपि विनैव पल्लवस्निग्धरागमधुर स्वय ददौ ॥
सा मदेन मदनेन लज्जया साध्वसेन च विमिश्रचेष्टिता ।
आययौ सपदि तादृशीं दशा या न वक्तुमपि शक्यविभ्रमा ॥
— जानकीहरणम् । सर्ग ८ । श्लोकौ १७-

रामचन्द्रस्य तथा मातु. सीताया सम्बद्ध सम्भोगश्रृङ्गारवर्णन विहितवान् । अत पूर्व सस्कृतस्य केनापि कविना कृत रामसीताविषयक सम्भोगश्रृङ्गारपरक वर्णन नैव प्राप्यते। पञ्चदशशताब्द्या पश्चात् केचन रामभक्ता खलु रामचरिते रासलीलाया परिकल्पना चक्रु । अस्य कारण जनसमाजे श्रीकृष्णरासलीलाया लोकप्रियत्वमेव वक्तु शक्यते । हनुमत्सहितालोमशसहिताभुशुण्डिरामायणरामतत्त्वप्रकाशप्रभृतिग्रन्थाना रचनाया उद्देश्यमपि कदाचिद्रामसीतयो रासलीलाया ऐतिहासिकताप्रमाणीकरण भवेन्नाम[1] । त एते ग्रन्था जनसमाजे समादर लभेरन् इत्यनेन कारणेनैतेषा रचयितार स्वाभिधानस्योल्लेख न कृत्वा, तानिमान् मुनिऋषिप्रणीतान्निर्दिदिशु । अमीषा साम्प्रदायिकाना लेखकाना कृपाया फल, यद्वाल्मीकेर्धनुर्धारी रामो मर्यादापुरुषोत्तम *सरयूनद्यास्तीरे तथा च तस्या पारे

---

१—अखण्डरासमण्डले सखीसमूहकल्पिते,
रराज राजनन्दनो विमोहयन् जगत्त्रयम् ।
प्रकामकामकामुको मनोजमन्त्रभाविताम्,
रणन् सुवल्लकी भृश सुधा सुधारया तदा ।।
क्वचित्क्वचिद्वनान्तरे क्वचित्क्वचिल्लतान्तरे,
क्वचित्क्वचित्कुचान्तरे प्रविश्य राजनन्दन ।
प्रदीपयन् मनोभव प्रदर्शयन् स्वलाघवम्,
कलाकुतूहल मुहु प्रकामकामशास्त्रजम् ।।

—लोमशसहिता २/१८७–१८६ सस्कृतगीतिकाव्यस्य विकास । ३१५ पृष्ठत —उद्धृतम् ।

एकान्ते सरयूतीरे कल्पपादपकानने ।
श्रीमान् नटवरवपु कोटिकन्दर्पसुन्दर ।।
रासलीला पुनश्चक्रे ताभिस्त्रिस्तरगो विभु. ।।

— मधुराचार्यकृतरामतत्त्वप्रकाश' ।
भुशुण्डिरामायणस्य प्रस्तावना ४६ पृष्ठत —उद्धृतम् ।

स्थिते कामिकावने, वनवाससमये च चित्रकूटे रासलीलापरायण शृङ्गारी समभूत्। कोदण्डधरो रामो मयूरपक्षधारी, मधुरमुरलीवादकश्च बभूव।[1]

संस्कृतसाहित्ये भगवतो रामस्यैवविधस्य शृंगारिस्वरूपस्य चित्रणपरम्पराया पूर्णत पल्लवितायां जाताया सत्यामपि तदानीन्तने समये समुत्पन्नो महाकवि-स्तुलसीदासस्तैषामेतेषा कवीनाममर्यादितेन शृङ्गाररससिक्तवर्णनेन प्रभावितो न बभूव। रामचरितमानसे रामस्य स्वरूप लोकरक्षकस्य, अन्यायमनीतिं प्रति सङ्घर्षकर्तुर्जगन्नियन्तुश्चाऽऽस्ते। रामस्य शृङ्गारिस्वरूपवर्णनपरम्परया प्रभाविते साहित्यिकवातावरणसमये समुत्पन्नोऽपि प्रस्तुताया कृते 'रामगीतगोविन्दम्' इत्यस्य लेखक श्रीजयदेव तादृशवातावरणेन सर्वथाऽस्पृष्टोऽस्ति। अतो वयमेतत्कथन-मसगत नावगच्छामो यदस्मिंल्लेखके महाकवितुलसीदासरचितस्य रामचरितमानसस्य प्रभाव. समधिक पपात। एतदेव हि कारण यद् 'रामगीतगोविन्दे' क्वापि च जगज्जनन्या सीताया सौन्दर्यवर्णन शृगाररसेनोतप्रोत नोपलभ्यते। मानसकार इवैव 'रामगीतगोविन्दस्य' प्रणेताऽपि—इति लेखनमुचितममंस्त[2] —

वाल्मीकिनाऽऽद्यकविना शतकोटिसख्य
रामायण विरचित शशिमौलिना च।
काकेन वायुतनयेन तथाऽपरेण,
किञ्चित् करोति जयदेवकविश्चरित्रम्॥

---

१—प्रसूनबाणाङ्कितमिक्षुचाप, चक्राब्जपाशाकुशवंशनालम्।
करैर्दधान घननीलवर्ण, श्रीकृष्णरूप प्रणमामि रामम्॥
विहाय कोदण्डमिम मुहूर्त, गृहाण पाणौ मणिचारुवेणुम्।
मायूरबर्हञ्च निजोत्तमाङ्गे, सीतापते! राघव! रामचन्द्र!!
तत्रैव रामकर्णामृतात् भुशुण्डिरामायणस्य प्रस्तावनायामुद्धृतम्।

२—नानापुराणनिगमागमसंमत यद्-
रामायणे निगदित क्वचिदन्यतोऽपि।
स्वान्त सुखाय तुलसी रघुनाथगाथा-
भाषानिबन्धमतिमञ्जुलमातनोति॥
—रामचरितमानसम्। बालकाण्डम्। श्लोक ७।

तथा केषुचित् स्थलेषु रामचरितमानसेनास्या कृते साम्यमपि वर्तते—

एकदा रघुपतिर्महागिरौ सीतया सह शिलातलेऽमले ।
निद्रितोऽभवदुदारविक्रम, शक्रसूनुरगमत् खगाकृति ॥
विददार पदाङ्गुष्ठमैन्द्रि काकपरीक्षया ।
ईषिकास्त्रेण रामोऽक्षि काण चक्रे दुरात्मना[1] ॥

सर्ग ४ । श्लोकौ २, ३ ।

तत्कालीनान्ये रामचरितगायका इव रामसीतयो श्रृगारिवर्णनस्याननुकरणात् तथोद्धृताना पङ्क्तीना रामचरितमानसस्य पङ्क्तिभि साम्यदर्शनादिद वक्तु शक्यते यत् स एष लेखकस्तुलसीदासात् परवर्तिनि कस्मिश्चित् समये जात स्यादिति । तुलसीदासो रामचरितमानसस्य प्रारम्भ वैक्रमीयेसवत् १६३१ तमे वर्षे, तदनुसारम् १५७४ ईसवीयवर्षे कृतवान्[2] । तुलसीदासस्य प्रादुर्भावोऽनेन कारणेन षोडशशताब्दया पूर्वभागो मन्यते । अत प्रस्तुताया कृते रचनाकाल १७ तम-शताब्द्या पूर्वार्धोऽर्थात् १६२५ तमवर्षत १६५० तमवर्षमध्ये कस्मिश्चिदपि समये स्वीकतु शक्यते ।

---

१— सीतहि पहिराये प्रभु सादर ।
बैठे फटिक शिलापर सुंदर ॥
• • ••• ••
सीताचरन चोच हति भागा ।
मूढ मन्द मति कारन कागा ॥

—रामचरितमानसम् ३ + १

२—सवत् सोरह सै एकतीसा ।
करौ कथा हरिपद धरि सीसा ।
नौमी भौमवार मधुमासा ।
अवधपुरीं यह चरित प्रकासा ॥

—रामचरितमानसम् । १ ३४ ।

अस्य रामगीतगोविन्दस्यैका हस्तलिखिता पाण्डुलिपिस्तच्चर्चा चावध-प्रदेशपण्डितपरिवारस्य सूचीपत्रे विद्यते।[1] तस्य लेखनकाल १८३४ ई० वर्तते। सेय पाण्डुलिपि सूचीनिर्माणसमये रायबरेलीमण्डलस्य पण्डितदेवीदयालस्य सविधे आसीत्। प्राचीनकाले कस्याऽपि ग्रन्थस्य प्रचारे प्रसारे तथा च विद्वत्समाजे समादरप्राप्तौ षष्टिसप्ततिप्रायाणि वर्षाण्यवश्य व्यतियन्ति स्म। कारण, तस्मिन् समये-आधुनिककाल इव यातायातयो सुविधा तथा मुद्रणयन्त्रणानि नासन्, काप्यन्या पाण्डुलिपिरेवविधा नोपालभ्यत, यस्या लेखनकालस्योल्लेखो भवेन्नाम। यदि चास्या कृतेर्निर्माण सप्तदशशत्या पूर्वमभविष्यत्तर्हि तत्कालीना पाण्डुलिपिरवश्यमेव हि प्राप्ताऽभविष्यत्। अस्या स्थितौ यावत् सप्तदशशत्या पूर्वतनी कापि च पाण्डुलिपिर्नोपलभ्यते, तावद्वयमस्या रचनाया काल सप्तदश-शतेर्द्वितीय चरण स्वीकर्तुमर्हाम।

अत केषाञ्चिद्विदुषा मते स्वय तुलसीदास एव 'रामगीतगोविन्देन' प्रभावित आसीत् स च 'रामगीतगोविन्द' मनुचकारेति अखण्डनीयाना प्रमाणानामभावे मत-स्यास्य खण्डनमपि न सम्भवति। तुलसीदासे 'रामगीतगोविन्दस्य' प्रभाव आसीदथवा जयदेवे 'रामचरितमानसस्य' इत्ययं निर्णय कठिन प्रतिभाति। अय हि भविष्यत्काले शोधकर्तॄणा प्रतिभया प्रकाशमानेष्यते। इदमेव मत रामकथालेखकस्य विदुष फादर कामिलबुल्के महोदयस्याऽपि वर्तते। यदि च वय 'रामगीतगोविन्दस्य' 'रामचरितमानसे' प्रभाव स्वीकुर्महि तदा जयदेवस्य जन्मकाल पञ्चदशशता-ब्दयास्तृतीचरण तथा 'रामगीतगोविन्दस्य' रचनाकाल षोडशशताब्द्या पूर्व-चरण मन्तु शक्येमहि।

प्रस्तुताया कृतेर्लेखकविषये तथा अस्या रचनाकालसम्बन्धे विचारकरणानन्तर टीकाकारस्य श्रीहनुमतस्त्रिपाठिन सम्बन्धेऽपि विचारकरण नाप्रासगिक स्यात्।

टीकाकार टीकासमाप्तौ स्वविषयिणीमेकस्मिन्पद्ये चर्चामकरोत्[2]। तया प्रतीयते, यदसौ वत्सगोत्रीयस्त्रिपाठी बभूव। मैथिलेषु ब्राह्मणेषु त्रिपाठिनो न प्राप्यन्ते

१—अवधप्रदेशपण्डितपरिवारस्य हस्तलिखितपुस्तकसूचीपत्रम्। भाग १३।
२—एतच्छ्रीमद्रामगीतगोविन्दार्थविवर्णनम्।
हनुमानकरोच्छ्रीमत्त्रिपाठी वत्सवशज॥
—रामगीतगोविन्दम्। पृष्ठम्। १०५।

तथा सरयूपारीणेषु त्रिपाठिनस्तु सन्ति पर तेषा वत्सगोत्र न भवति । अतष्टीका-लेखको न मैथिलो न च सरयूपारीणो ब्राह्मण । कारणेनानेन स उत्तरप्रदेशस्य पूर्व-भागस्यापि निवासी नासीत् । टीकाकार स्वटीकाया पाणिने सूत्राणामुद्धरण न प्रददौ । प्रमाणे स सारस्वत-व्याकरणस्य सूत्राण्युद्धृतवान् । तस्य गोत्रमपि च वत्सगोत्र वर्तते । अनेन प्रतीयते यत् सोऽय कान्यकुब्जब्राह्मणो भवेन्नाम । यतोऽवधप्रदेशस्य, कान्यकुब्जेषु ब्राह्मणेषु वत्सगोत्रीयास्त्रिपाठिनोह्युपलभ्यन्ते, तेषु च सारस्वतव्याकरणस्याध्ययनस्य परम्पराप्यस्ति । टीकाकारस्य विषये इतोऽधिक खल्वाधिकारिकरूपेण किमपि कथन कठिनमाऽऽस्ते । टीकाया अध्ययनेनानुशीलनेन च तदिद निश्चितरूपेण वक्तु शक्यते यदसौ टीकाकार स्वविषयस्याधिकारी विद्वानासीदिति ।

प्रस्तुता कृतिर्गीतकाव्य विद्यते, यत्कृते शास्त्रीय पारिभाषिक शब्दो 'राग-काव्यम्' इति समीचीनोऽस्ति । गीतकाव्यस्य भारतीये साहित्यशास्त्रे का स्थिति. सतस्थे, विषयेऽस्मिन् विस्तृत विवेचनमह गीतगिरीशस्य भूमिकाया कृतवानस्मि ।[1] अथाभिनवगुप्तस्य भरतनाट्यशास्त्रटीकाया प्रतीयते यद् 'राघव-विजयम्' तथा 'मारीचवधम्' इति नामके द्वे काव्येऽपि चास्ताम् । प्रथम ठक्क-रागे तथापर ककुभग्रामरागे गीयमानमभिनीयमान चाभूत् ।[2] जयदेवस्य गीत-गोविन्दम् तस्यामेव परम्परया लिखित रागकाव्यमाऽऽस्ते । अस्या स्थितौ पाश्चा-त्यविदुषामिय मान्यता यत्पूर्ववर्तिन्यामपभ्रशभाषाया लिखितात् कस्माच्चित् काव्यात् प्रेरणा प्राप्य जयदेवो गीतगोविन्दमलेखीत् सगता वक्तु न पार्यते । खेदस्याय विषयो यदधुना राघवविजयम् तथा च मारीचवधम् रागकाव्ये

---

१—दृश्यताम्—गीतगिरीशस्य भूमिका । पृष्ठम् । ८ ।

२—अथोच्यते राघवविजयादिरामविजयादिरागकाव्यादिप्रयोगो नाट्यमेवा-भिनययोगात् ।

—अभिनवभारती । अध्याय ४ । पृष्ठम् । १७२ ।

तथाहि राघवविजयस्य ठक्करागेणैव विचित्रवर्णनीयत्वेन निर्वाह । मारीचवधस्य ककुभग्रामरागेणैव, अत एव रागकाव्यानि उच्यन्ते एतानि । तत्रैव ।

—पृष्ठम् । १८२ ।

नोपलभ्येतेऽन्यथा विवादस्यास्य सर्वथा निराकरण जातं भवेत् । वास्तविकी स्थिति सैषास्ते यदद्यावधि सस्कृतस्य स्वरताललयभाषाबद्धस्य रागकाव्यस्य सत्य मूल्याङ्कन समालोचकै कर्तु न पारितम् । जयदेवस्य प्रत्येकस्य गीतस्य कृते काव्ये क्वचित् प्रबन्धस्य क्वचिच्चाष्टपद्या प्रयोगोऽभूत् ।[1] आचार्य आनन्दवर्धन प्रबन्ध-शब्दस्य प्रयोग प्रबन्धकाव्यार्थं कृतवानाऽऽस्ते ।[2] भोजस्तु जयदेवेन गीतार्थे प्रयुक्तस्य प्रबन्धशब्दस्याधार स्वीकृत्य एका परिभाषामेव व्यरचयत्, सा च श्रृगाररसप्रधाना स्वरताललयबद्धा रचनैव प्रबन्धो भवतीति ।[3] गीतगोविन्दस्य सजीवनीटीकाकार श्रीवनमालीभट्टश्चापि प्रबन्धशब्दस्य व्याख्यामेव कृतवान् ।[4] गीतगोविन्दस्य काव्यस्य कस्या विधाया परिगणन चिन्तनञ्च स्यात् नन्वेतदपि चाद्य यावत् सर्वथाऽनिर्णीतमास्ते । द्वादशसर्गेषु लिखितत्वात् केचन विद्वासस्तदिद महाकाव्य स्वीकृतवन्त । केचिदस्मन्मताद्विरुद्धाश्चापि सन्ति । डा० आर्येन्द्रशर्माणस्तदिद महा-काव्य स्वीकृतवन्त ।[5]

---

१—अष्टपद्या प्रयोगार्थं दृश्यताम्—लालभाई दलपतभाई, भारतीय-सस्कृत-सस्कृतविद्यामन्दिर—अहमदाबादत प्रकाशित 'गीतगोविन्दम्' तथा प्रबन्धशब्दस्य प्रयोगार्थं सस्कृतसाहित्यपरिषद्, उस्मानियाविश्वविद्यालयहैदराबादत प्रकाशित 'गीतगोविन्दम्' ।

२—प्रबन्धे मुक्तके वापि रसादीन् बद्धुमिच्छता ।
यत्न कार्य सुमतिना परिहारे विरोधिनाम् ॥
ध्वन्यालोक । उद्योतस्तृतीय ।

३—श्रृङ्गारैकप्रधानो यो गीततालादिसयुत ।
अभिसारार्थनिपुण प्रबन्ध सम्प्रकीर्तित ॥
सस्कृतसाहित्यपरिषद् उस्मानियाविश्वविद्यालयहैदराबादत प्रकाशिताया गीतगोविन्दस्य सजीवनीटीकाया भोजस्य नाम्नोद्धृतम् । पृष्ठम् । ७ ।

४—प्रकर्षेण बन्धोऽन्योन्यासक्तिरूपो नायिकानायकयोर्यत्र स प्रबन्ध । तत्रैव पृष्ठम् । ८ ।

५—दृश्यताम्—सस्कृतसाहित्यपरिषद्, उस्मानियाविश्वविद्यालय हैदराबादत प्रकाशित गीतगोविन्दम् ।

वस्तुतो 'गीतगोविन्दम्' श्रव्यकाव्यविधाया कस्याश्चिदपि कोटेरन्तर्गत न भवति। तदेतद् गेयनाट्य वर्तते। काव्यभेदान्तर्गताया गेयनाट्यस्य चर्चाया अभावात् परम्परावादिनो भारतीया विद्वासस्तदिदं मत खण्डयन्ति, परन्तु परम्पराया एवाधारस्वीकरणमुचित वक्तु न शक्यते। प्रसिद्धो जैनविद्वान् हेमचन्द्राचार्योऽस्मभ्य नव्या दिश प्रददौ। स हि काव्यानुशासनस्याष्टमेऽध्याये प्रबन्धात्मके काव्ये दृश्यकाव्यस्य द्वौ भेदौ पाठ्य तथा गेय च मेने[1]। स खलु गेयमपि चानेकेषु भेदेषु व्यभजत्[2] हेमचन्द्राचार्योऽन्ये साहित्यशास्त्रिण इव नाटकस्य कृते दृश्यशब्दस्य स्थाने प्रेक्ष्य-शब्दस्य प्रयोग कृतवान्। नाटकस्य तदिद वर्गीकरण हेमचन्द्राचार्य कदाचिद्-अभिनवगुप्तद्वारा अभिनवभारत्या प्रोक्तेन रागकाव्येन प्रेरितः सन् कृतवान्। स हि किलास्य पुष्ट्यर्थं काव्यानुशासनस्य "स्वरचिताया टीकायामलङ्कारचूडामणावभिनवभारत्या शब्दावलि साधारणेन परिवर्तनेन सहोद्धृतवान्[3]। अभिनवभारत्या उल्लेखो नास्ति। अस्तु--अस्या दशाया गीतगोविन्दस्य गेयनाट्यस्वीकरणन्नास्त्येवासगतम्। तदधुना प्रकृतमनुसराम।

पूर्वपृष्ठेषु तदिद लिखितचर यद्, 'रामगीतगोविन्दम्' जयदेवस्य गीतगोविन्द-परम्पराया लिखित काव्यमस्ति। लेखकोऽस्या रचनाया प्रयोजन प्रारम्भे उद्घोषितवान्—

यदि रामपदाम्बुजे रतिर्यदि वा काव्यकलासु कौतुकम्।
पठनीयमिद तदौजसा रुचिर श्रीजयदेवनिर्मितम्॥

---

१—प्रेक्ष्य पाठ्य गेय च। महावीरजैनविद्यालयमोहमयीत प्रकाशित काव्यानुशासनम्। पृष्ठम्। ४३२।

२—गेय डोम्बिकाभाणप्रस्थानशिगकभाणिकाप्रेरणरामाक्रीडहल्लीसरासक-गोष्ठीश्रीगदितरागकाव्यादि। काव्यानुशासनम्। पृष्ठम्। ४४५।

३—तथापि गीताश्रयत्वेन वाद्यादे प्रयोग इति गेयमिति निर्दिष्टम्। राग-काव्येषु च गीतेनैव निर्वाह। तथाहि राघवविजयस्य विचित्रवर्णनीयत्वेऽपि-ढक्करागेणैव निर्वाह, मारीचवधस्य तु ककुभरागेणैवेति।

—काव्यानुशासनस्य–अलङ्कारचूडामणिटीका। पृष्ठम्। ४४७।

एवमेव गीतगोविन्दकारोऽपि स्वकाव्यस्य प्रारम्भेऽलेखीत्--

**यदि हरिस्मरणे सरस मनो यदि विलासकलासु कुतूहलम् ।**
**मधुरकोमलकान्तपदावली शृणु तदा जयदेवसरस्वतीम् ।।**

द्वयोरपि ग्रन्थकारयो प्रणयनप्रयोजन एकरूपताया सत्यामपि चोद्देश्ये भिन्ने स्त । पीयूषवर्षिणो जयदेवस्य 'गीतगोविन्दम्' विलासिजनाना मनोरञ्जनार्थ तथा च रामगीतगोविन्दस्य लेखन काव्यकलाप्रणयिना कृते बभूव । तस्मादेव गीतगोविन्दे यत्र 'विलासकलासु कुतूहलम्' लिखित तत्रैव रामगीतगोविन्दे जयदेव 'काव्य-कलासु कुतूहलम्' इति लेखनमुचित मेने । गीतगोविन्दकारस्य जयदेवस्य 'विलास-कलासु कुतूहलम्' इति लेखनस्यार्थश्चोद्देश्य च विभिन्नाना टीकाकाराणा व्याख्याभि स्पष्ट भवति । सञ्जीवनीकारो वनमाली भट्ट [1], पदद्योतनिकाया लेखको नारायण पण्डितो[2], जयन्तीटीकाया कर्ता कृष्णो,[3] रसिकप्रियाया रचयिता कुम्भनृपतिः,[4] रसमञ्जरीटीकाप्रणेता प्रसिद्धनैयायिको महामहोपाध्याय शङ्करमिश्रश्चेति[5] सर्वेऽपि पदस्यास्य व्याख्या स्वस्वप्रकारेण विदधिरे । तथापि त एते सर्वेऽपि टीका-कारा विषये किलैकस्मिन् येन केन प्रकारेणैकमता भवन्ति यत् कामशास्त्रोक्तासु विभिन्नासु कलासु पारगताना प्रणयिजनाना पठनार्थ गीतगोविन्दस्य रचना व्यधी-यतेति । पदद्योतनिकाटीकाया लेखको—नारायणपण्डितस्तथा च रसिकप्रियाया कर्ता कुम्भनृपतिस्तु 'विलासकलासु कुतूहलम्' इत्यस्य स्थाने 'विला-सिकलासु कुतूहलम्' इति पाठ स्वीकृत्य स्वव्याख्या व्याचख्यौ । एतेन तु

---

१—विलास स्त्रीणा प्रतितिथिकेशाद्यधोऽङ्गस्पर्शश्चरणोर्ध्वं च रतिकोशोक्त-स्तस्य कलासु चतुष्षष्टिक्रीडासु कुतूहलम् कौतुकम् । सजीवनी । पृष्ठम् । ११ ।

२—विलासकला चतुष्षष्टि, तासु कुतूहलमस्तीति । पदद्योतनिका । १२ ।

३—विलासा शृंगारचेष्टा तद्वन्तो विलासिन तेषा कलासु कुतूहल कुतुक-युक्त यदि भवति । जयन्ती । पृष्ठम् । १२ ।

४—विलासिना शृंगारिणा कलास्तासु । गीतगोविन्दस्य रसिकप्रिया टीका । पृष्ठम् । ८ ।

५—विलास स्त्रीणा हावविशेषस्तत्सम्बन्धिनीषु कलासु कुतूहल कौतुकम् । गीतगोविन्दस्य रसमञ्जरीटीका । पृष्ठम् । ८ ।

सर्वथा स्पष्टमास्ते यज्जयदेवो हरिस्मरणेन साकं विलासिजनानां प्रसादनञ्चापि स्वकाव्यस्योद्देश्यं तथा च तान् स्वकीयगीतगोविन्दस्य पठने श्रवणे चाधिकारिणो मेने। अतो विपरीतं रामगीतगोविन्दस्य लेखकः 'काव्यकलासु कौतुकम्' लिखित्वा[१] काव्यसम्बन्धिनीनां कलानामध्ययनं प्रति येषां मनोऽभिलाषो भवेत्त एव हि जना मर्यादापुरुषोत्तमरामस्य पराक्रमेण, शौर्येण च पूर्णस्यास्य सुन्दरकाव्यस्य पठनेऽधिकारिणः सन्तीति स्वीचकार। अनेन सुस्पष्टं वर्तते यत् काव्यकलाप्रणयिना कृत एव हि काव्यरचनायाः प्रयोजनं स स्वीकृतवान्। काव्यस्य टीकाकारेण श्रीहनुमत्त्रिपाठिना 'काव्यकलासु कौतुकम्' इत्यस्य व्याख्यायां 'विव्वोकहावादिषु कौतुकं स्यात्' इति यल्लिखितं तन्नहि सगतं प्रतीयते। सैषा व्याख्या ग्रन्थकारस्य भावनाभ्यो विपरीतास्ते। विव्वोको हावश्च पारिभाषिकशब्दौ स्तः। कामिनीनां भावनाविशेषस्याभिव्यक्तेर्हेतोः शब्दयोरनयोः प्रयोगः साहित्य-शास्त्रस्य पण्डितैः क्रियमाणोऽस्ति। प्रस्तुतकाव्यलेखकस्य मुख्योद्देशो गीतगोविन्दस्येव केलिपरस्य कामिनीनां हावभावप्रकाशकस्य च वातावरणस्याङ्कनं नास्ते। इदं समग्रं काव्यं मर्यादापुरुषोत्तमरामं प्रति पाठकानां मनसि भक्तेः, श्रद्धायास्तथा च तस्य गरिममण्डितमोजस्विकार्यकलापं प्रति समादरभावनायाः उत्पादनायालिख्यत। कविरसौ–'तदौजसा रुचिरम्' विलिख्य स्वस्य तदिदं मन्तव्यमुद्घोषितवान्। स्पष्टमास्ते यदिदं काव्यमोजोगुणस्याभिव्यक्तिकारकमस्ति। अन्यानि गीतकाव्यानीवास्यापि शृगाररसप्रधानं काव्यमिति कथनं नामाज्ञतायाः परिचायकं स्यात्। तदिदं वीररसस्य काव्यं विद्यते। एतदेव कवेरभीष्टम्। इण्डिया-आफिसलदनस्य पुस्तकालये रामगीतगोविन्दस्यैका हस्तलिखिता प्रतिर्वर्तते। तस्याः काव्यस्यान्तिमश्लोकस्य तृतीयपादे 'गानरसप्रधानम्' इत्यस्य-

---

१—काव्यसम्बन्धिन्यः कलाः काव्यकलाः—तासु काव्यकलासु। मध्यमपदलोपी समासः।

—अभिधानकोष, छन्दोज्ञानम्, क्रियाकल्प,

—कामसूत्रम्। अधिकरणम् १। अध्याय ३

स्थाने 'वीररसप्रधानम्' इति पाठ प्राप्यते[1]। पाठेनानेन साक काव्यस्यारम्भे कवेर्मन्तव्यस्य 'ओजसा रुचिरम्' इत्यस्य पूर्णा सगतिरपि जायते। वीररसस्य काव्य एवौजसोऽभिव्यक्ति सम्भवति। अत इण्डिया-आफिसलदनपुस्तकालयस्य प्रते पाठ सर्वथा समीचीनोऽस्ति।

प्रस्तुताया कृतौ षट्सर्गा विद्यन्ते। समग्र हि काव्य मर्यादापुरुषोत्तमस्य रामस्योजस्विचरितेनौतप्रोत विद्यते। कवि काव्यस्य प्रारम्भ मगलाचरणेन कृतवान्। तदनन्तरमादिकवि वाल्मीकि स्मृत्वा प्रवाहमय्या सरलया च भाषया भगवतो रामस्य दशावतारवर्णन कवि 'जय जय राम हरे' इति मधुरलयेन गीतेनैकेन चकार। गीतेनानेन पाठकाना समक्ष भगवतो रामस्य दशावताराणा दिव्य स्वरूप मूर्तिमद् बोभूयते। गीतस्यास्यैकस्मिन्न शेऽनीतिकारिण शासकान् प्रत्याक्रोशस्याभिव्यक्ति कुरुते—

**यवनविदारण! दारुण! हयवाहन! ए!**
**धृतकरवाल! कराल! जय जय राम हरे!**

अत्र भगवत कृते यवनविदारणहयवाहनधृतकरवाल इत्येतै सम्बोधनै प्रतीयते यत् तत्कालीनैरत्याचारिभि शासकै प्रपीडिताना जनताना रक्षार्थ कवि करवालधारिण पौरुषपूर्णरूपस्य धारणाय राम प्रति प्रार्थना विदधाति। इत्थमोजस्विन्या शैल्या दशावताराणा वर्णनानन्तर कविर्महता कौशलेनैकस्मिन् श्लोके समस्तस्य रामायणस्य कथानक साङ्केतिक्या शैल्यामुपस्थित कृतवानास्ते।

**भूभारभञ्जन! भवाब्धिवरिष्ठपोत!**
**मा पाहि कान्त! करुणाकर! दीनबन्धो!!**
**श्रीरामचन्द्र! रघुपुङ्गव! रावणारे!**
**राजाऽधिराज! रघुनन्दन! राघवेश!!**

—सर्ग १। श्लोक ५।

---

१—श्रीमद्विदेहनृपदेशकृताधिवासो, नि शेषभूमिपतिमण्डलमाननीय।
एतच्चकार वरवीररसप्रधान काव्य कविप्रकरमौलिविभूषण सत्॥
इण्डियाआफिसपुस्तकालयलन्दनस्य सूचीपत्रम्।
—भाग ७। पृष्ठम्। १४८०।

अनेन श्लोकेन कविर्बालकाण्डादारभ्योत्तरकाण्डपर्यन्तस्य समग्रामपि कथामत्यन्तसक्षेपे कलात्मकेन प्रकारेण वर्णितवान् । टीकाकारोऽस्य श्लोकस्य वैदुष्यपूर्णाया स्वव्याख्यायामस्य प्रतिपादन चकार । श्लोकेऽस्मिन् सम्बोधनात्मकशब्दस्याधारेण रामायणस्य सम्पूर्णाया कथाया अवतारणा जयदेव इव प्रतिभाशाली कविरेव कर्तु क्षम । ततोऽग्रे कवि स्वस्या मिथिलापुर्याश्चापि मनोज्ञवर्णन न व्यस्मार्षीत् । तत्रत्याना लता-वापी-कूप-तटाकादीना मनोहारिण स्वरूपस्य चित्रण-प्रसंगे मिथिलाकर्मनिष्ठाना, सुशीलाना, बुद्धिजीविना च पण्डिताना नगरी वर्तते, इत्यस्य पाठकाना समक्ष चर्चाकरण चापि कवि समीचीन मेने—

जयति विदेहनगरमनुरूपम् ।
दिशि दिशि राजमानचामीकर-
रचितविविधमणियूपम् । ध्रुवपदम्
रुचिरलतातरुसुमनवाटिकावापीकूपतडागम् ।
वप्रवलयपरिखावृतमभिनवचित्रमुदयदनुरागम् ॥
शेषभयङ्करवेशनृपतिदुर्धर्षमहेशपिनाकम् ।
मणिमयसौधसमूहमुदग्रमरुच्चलविशदपताकम् ॥
तोरणनिकरकिरणसचारविनिन्दितसुरपतिचापम् ।
आहुतिगन्धसहितमखधूमविधूतसकलजनपापम् ॥
गजरथतुरगपदातिविघट्टविशृङ्खलशब्दमुदारम् ।
शारदविधुसकाशविकाशकनककलशाश्रिततारम् ॥
पण्डितसुमतिसुशीलसुधर्मसुकर्ममनुजपरिवारम् ।
प्रतिपदपद्मनिहितनिजचित्तचतुरसुन्दरपुरदारम् ॥
सुखदवितानमनेकतपोधनभूषितमतिशयशोभम् ।
पङ्कजयोनिविनिर्मितमिव कृतसन्ततमानसलोभम् ॥
श्रीजयदेवकवेरुदित मिथिलापुरगीतमशोकम् ।
मङ्गलमोदभरेण करोतु सदा मुदित जनलोकम् ॥

सर्ग २ । पृष्ठानि ३३-३४—३५-३६ ।

काव्यप्रतिभाधनस्य कवे स्थानविशेषस्य पात्रस्य वा स्वरूपचित्रण नितान्त

सहज प्रतिभाति । अथ भगवत शङ्करस्य धनुर्भङ्ग सजात । घटनयाऽनया स्वेष्टदेवस्य धनुर्भङ्गाद् रुष्टस्य शरचाप तथा तीव्रतरधार भयङ्करकुठार धारयत क्रोधावेशेऽधरोष्ठ खण्डयतश्च परशुरामस्य रौद्ररूपचित्रण, कविरय स्वस्य ज्यौतिषशास्त्रस्य पाण्डित्यसूचकानामुपमाना माध्यमेन प्रस्तुत कृतवान्—

**भृकुटीकुटिलमरुणवदन रदखण्डितरदपरिधानम् ।**
**दधतमिव द्युमणि शशिन सकुज ससित कृतमानम् ॥**
**रुचिरजटामुकुटद्युतिपुञ्जविभासिमनोहरभालम् ।**
**पाणिसरोजनिहितशरचापकुठारमतीव करालम् ॥**

**सर्ग २ । पृष्ठम् । ३६ ।**

अथैकस्मिन् गीते कविरसौ प्रयागस्याऽपि मनोहारि वर्णन कृतवान् । अस्मिन् प्रसगे त्रिवेण्यास्तटे समुद्धूयमानाना विविधवर्णाना पताकानामपि चित्रण विद्यते । इत्थ प्रतीयते यदय कवि स्नानार्थं प्रयागमागतोऽभूत् । एतदेव हि कारण यत्साम्प्रतिकानामिव तत्कालीनाना गङ्गापुत्राणमपि चित्रविचित्रा विविधवर्णा पताका दोधूयमाना आसन्, इत्यस्य दृश्यस्य चित्रमिवोपतिष्ठते । गीतस्यैकोऽशो दृश्यताम्—

**पश्य पश्य रघुवीर ! ! प्रयागम् ।**
**मज्जदखिलमुनिगणमतिरागम् ।**

**नीलपीतसितचित्रपताकम् ।**
**सुखसमूहशिथिलीकृतनाकम् ॥**

**सर्ग ३ । पृष्ठम् । ६६ ।**

अनेनैव प्रकारेण कविरय चित्रकूटस्याऽपि वर्णनमत्यन्तमनोयोगेन चकार । समस्ते काव्ये चित्रकूटस्यैतद्वर्णन सहजतयैव हृदयमाकर्षति । यदि वयमिद वर्णन सर्वोत्कृष्ट वदेम, तदा नात्युक्तिर्भवेत् । एतावत् सुन्दर वर्णन तु कविरेष स्वजन्मभूमेर्मिथिलायाश्चापि नो चक्रे । उल्लेखनीय तथ्य विद्यते यदसौ कविरस्मिन्नेव गीते महाकविरिति विशेषणमपि प्रयुयोज । पठनसमये नैसर्गिक दृश्यमुपस्थित भवति—

**चित्रकूटमवलोकय सीते !**
**उन्नतशिखरलिखितघनमण्डलमङ्गलकरणविनीते ! ध्रुवपदम्**
**मन्दाकिनीप्रवाहविलङ्घनचञ्चल पक्षमरालम् ।**
**विकसितकुन्दलवङ्गलतालवलीसरसीरुहमालम् ॥**

चम्पकभूर्जकदम्बतमालमुनिद्रुमभूषितभागम् ।
वैरिविहीनमतङ्गजसिंहमयूरमहाविषनागम् ॥

गवयशरभहरिणीहरिणादनकपिकुलविपुलविहारम् ।
इन्धनदलफलकुसुमदर्भजलहेतुकमुनिसचारम् ॥
श्रीजयदेवमहाकविनिर्मितमद्भुतभूधरगीतम् ।
हरतु मल सकल पठतामनिश प्रकरोतु विनीतम् ॥

सर्ग ४ । पृष्ठानि ७०,७१, ७२, ७३ ।

इद समस्त काव्यमेवैतादृशैर्गीतै परिपूर्णं वर्तते । समासपूर्णपदावले प्रयोगे जाते सति पाठकाना पदे पदे पठनसमये माधुर्यस्यानुभूतिर्भवति । अर्थबोधार्थं क्वाऽपि च बुद्धेर्व्यायामस्यावश्यकता न भवति । केषाचिद् गीताना तु पठनसमये पाठका भावविमुग्धा भवन्त्येव ।

कविरय काँश्चन नूतनतमशब्दानपि प्रयुयोज । तेषु 'नवीणा' शब्दोऽतीव महत्त्वपूर्णोऽस्ति[1] । सस्कृतकवयस्तमिम शब्द न प्रयुयुजिरे । टीकाकारोऽपि चास्य शब्दस्य सिद्धि निपातेन मेने । गीतिकाव्ये शब्दप्रयोगस्य दृष्ट्या सस्कृतस्य कविगणा व्याकरणस्य नियमान् सदैव तिरस्कृतवन्त । नवीणा शब्दस्येव सस्कृते 'नवल' शब्दस्यापि प्रयोगो न प्राप्यते तथा च गमनार्थसूचकस्य 'गमण' स्यापि प्रयोगो नास्ते । 'नवल[2]' तथा च 'गमण[3]' इत्यनयो. शब्दयो प्रयोग षोडश्या शताब्द्या रचितस्य 'कृष्णगीते' र्लेखक कविसोमनाथ किलैकस्मिन् श्लोके तथा गीतस्य ध्रुवपदे कृतवानास्ते[4] । 'नवल' शब्दस्य प्रयोग तु

---

१—गायति सामखिलामृषिराजिरखण्डितवीणा ।
नृत्यति देववधूरुचिरायुतभावभरेण नवीणा ॥
—दृश्यताम्—गीतस्यास्य टीकाऽपि । पृष्ठम् । १०३ ।

२—श्रीराधिकानवलकेलिवशीकृतस्य,
कृष्णाङ्घ्रिपद्ममकरन्दलिहा नराणाम् ।
आनन्दनाय कुरुते द्विजसोमनाथ ॥
—कृष्णगीति । श्लोक ४ ।

३—राजति राधा नवलवशे ।
—पृष्ठम् । १८ । तत्रैव ।

४—अतिरुचिरुचिकरलम्बितनीवीदर्शनधर्षितरमणे ।
मन्थरचरणविहारविनिर्जितमदवारणगमने ॥ पृष्ठम् २० । तत्रैव ।

संस्कृतस्यैक आधुनिक कविरपि स्वकाव्ये कृतवानस्ति[1]। अद्यत्वे खल्वेव-विधाना शब्दाना प्रयोगस्य प्रचलन जातमास्ते । नवलशब्दस्य विषये केषाञ्चिज्जनाना, मतमास्ते यत् सोऽय शब्द णउल्लशब्दस्य संस्कृतरूप विद्यत इति । अस्या दशाया 'गमण' शब्दस्य सम्बन्धे वक्तु शक्यते यदस्मिन् शब्दे प्राकृतभाषाया प्रभावोऽस्तीति । कारण प्राकृतभाषाया[2] 'न–स्थाने' णकारो भवति । वास्तविकी स्थिति सेयमास्ते यद्धि रागकाव्यस्य (गीतकाव्यस्य) प्राणो रागो भवति । तस्य कृतेऽन्त्यानुप्रास आवश्यकोऽस्ति । अस्याभावे माधुर्यस्य, चमत्कारस्य चाभिव्यक्तिर्न तत्र भवति । अर्थाद् गीतकाव्येऽन्त्यानुप्रासोऽनिवार्योऽस्ति । अस्यैवानुप्रासस्य मोहात् कविगणा एवविधमपाणिनीय प्रयोग विधाय 'अनुप्रासस्य लोभेन भूप कूपे निपातित' इति तामिमा प्राचीना सूक्ति चरितार्थयन्तो दरीदृश्यन्ते । छन्द शास्त्रस्य पण्डिता प्रोचु 'अपि माष मष कुर्याच्छन्दोभग न कारयेत् ।' गीतेऽन्त्यानुप्रासस्याभाव प्रकारान्तरेण छन्दोभग एव मन्तव्य: स्यात् ।परन्तु श्लोके अपाणिनीयशब्दप्रयोगोऽक्षम्यो भवति । देशीयशब्दाना प्रयोग तद्रूप एवोत्तरकालीना संस्कृतकवय कृतवन्तो यथा–'मरहट्ठ' 'गरीबनिवाज'[3] इत्यादि । अत्र अणुमात्रमपि परिवर्तनशब्दे नास्ति। एतेनाऽपि पठनेन पाठकस्य मनो नो-

१—नवलहीरकहारिमुरारिदृक् ,
चपलखञ्जनचारुविहारभू ।
स्तनयुग तव भामिनि ! भासुर,
प्रभवताद् भवतापनिवारणे ।।
—श्रीरामनारायणदत्तशास्त्रिपाण्डेय-
कृतहरिवल्लभास्तोत्रम् । पृष्ठम् । ३६ ।

२—नोण सर्वत्र । वररुचे प्राकृतप्रकाश । पृष्ठम् । १६ ।
[कावेलस्य संस्करणम् १९६२]

३—नान्ध्रीपयोधरमिवातितरा निगूढ ,
नो गुर्जरीस्तनमिवातितरा प्रकाश ।
अर्थो गिरामपिहित पिहितश्च कश्चित्,
सौभाग्यमेति मरहट्ठवधूकुचाभ ।।
—काव्यप्रकाशस्य प्रदीपटीकाकारेण गोविन्दठक्कुरेणोद्धृत. ।
सकलगुणपरीक्षणैकसीमा, नरपतिमण्डलवन्दनीयधामा ।
जगति जयति गीयमाननामा, गरीबनिवाजनवाबखाना ।।
—रुद्रकविकृतनवाबखानाचरितम् ।

द्विजते संस्कृतभाषाया ग्रहणशीलताया एव प्रभाव । अनेनैव प्रकारेण गीतस्य ध्रुवपदे 'स्मृत्य विभु वातसुतम्'[1] प्रस्तुतकाव्यलेखको लिलेख । व्याकरणस्य नियमानुसार 'सस्मृत्य' भवितुमर्हति । शब्दस्यास्य विषये टीकाकारः स्वाभिमत नालेखीत् । संस्कृतविश्वविद्यालय-वाराणस्या सरस्वतीभवनपुस्तकालये स्थितस्य 'रामगीत-गोविन्दस्य' एकस्या खण्डिताया प्रतौ 'स्मृत्वा विभु वायुसुतम्' पाठ उपलभ्यते । वस्तुतोऽयमेव पाठ शुद्धोऽस्ति । टीकाकार 'स्मृत्य' इति मत्वा टीकामकार्षीत् । अत एव मया तदनुकूलः पाठ प्रादीयत ।

पाण्डित्यप्रदर्शनार्थं कविर्यत्रतत्राप्रचलिताया शब्दावलेश्चापि प्रयोग कृत-वान् । 'अतसीपुष्पस्य स्थाने 'क्षुमापुष्प'[2] दशरथस्य कुम्भकर्णस्य च कृते क्रमश पक्तिरथस्तथा[3] घटश्रुति[4] इति शब्दौ प्रयुक्तौ स्त । टीकाकार श्लोके किलैकस्मिन्—

निदध्वनुर्दुन्दुभय समन्ताज्जगुश्च गन्धर्वगणा. प्रवीणा ।
वन सपुष्प सरिदम्बुपूर्णाऽस्यराधरित्री विमल नभश्च ॥
सर्ग १ । पृष्ठम् । १६ ।

प्रयुक्त 'अस्यरा' शब्दमत्यन्तक्लिष्टकल्पनामूलाया व्युत्पत्त साहाय्येन साधयितु प्रयेते । मन्मतेऽत्र लिपिकार शीघ्रतावशात् स्थिराया स्थाने स्थराम-लेखीत् । टीकाकारस्तत् 'स्थरा' बुबोध । नैतदेव वरंच पूर्णाया स्थरायाश्च मध्ये खण्डाकारस्याऽस्तित्वं मत्वा 'अस्यरा' पाठमेव चकल्पे । तथा च तमेव हि वैयाकरणिक्या व्युत्पत्त्या साहाय्येन शुद्धं पाठं साधयितु हठधर्मितापूर्णं प्रयत्नं[5]

---

१—प्रस्तुतकाव्यम्—पृष्ठम् । ८० ।

२—क्षुमापुष्पश्यामो विकचविशदाम्भोजनयन ,
प्रवालौष्ठौ विभ्रद्रुचिरतरकोदण्डभिदुर ॥
पृषत्कान् पाणिभ्यामतिविमलमुक्ताफलरदो,
महावीरो धीरो मनसि रघुवीरो निवसताम् ॥
पृष्ठम् । २४ ।

३—तस्मिन् गते परशुराममुनावरण्यमीनीय पंक्तिरथमात्मपुरोहितेन ।
पूजा चकार महतीं विधिना विधिज्ञ , प्रपच्छ शारदशिव जनकाधिराज ॥
सर्ग २ । पृष्ठम् । ४८ ।

४—जघान ह्रीमान् गिरिशृङ्गसन्निभान् , महाबलान् मुद्गरशस्त्रयोधिन. ।
दशास्यमुग्रं घननादमुद्भट, घटश्रुतिं चैव तथैव राम ॥
पृष्ठम् । ६३ ।

५—दृश्यताम्—प्रस्तुतश्लोकस्य टीका । पृष्ठम् । १७ ।

चक्रे। वस्तुतोऽत्र 'स्थिरा' इत्येव पाठ शुद्धोऽस्ति। पाठेनानेन श्लोकस्यार्थोऽपि च सरलतया सगच्छते।

अपि 'रामगीतगोविन्दम्' महाकाव्यम् ? विषयेऽत्र संक्षेपतो विमर्शो नानुपयुक्त स्यात्। सर्वास्वपि हस्तलिखितासु प्रतिषु तासा पुष्पिकासु महाकाव्यं लिखितमास्ते। इण्डिया-आफिस-पुस्तकालय-लन्दनस्य हस्तलिखितप्रते पुष्पिकायामपि[1] महाकाव्य-मुल्लिखितमस्ति। कारणेनानेन मया प्रस्तुतकाव्यस्य प्रतिसर्गान्ते महाकाव्यस्यापा-करणमुचित न मतम्।

द्वादशसर्गेषु निबद्धत्वाद् 'गीतगोविन्दम्' महाकाव्य मन्तु शक्यते। प्रस्तुत काव्य तु कथमपि महाकाव्य भवितु नार्हति। कविरसावात्मान महाकविमुद्घोषित-वान्[3] परन्तु पुष्पिकाया महाकाव्यशब्दस्य प्रयोग कविरथवा तस्य श्रद्धालवो लिपि-कारा पश्चात् कृतवन्त – अस्य निर्णयोऽत्यन्तकठिनोऽस्ति। एवमेवैकस्या प्रते पुष्पिकाया 'सकलकविमुकुट' इति विशेषण वर्तते तथा च इण्डिया-आफिसलदनपुस्तकालयस्थाया प्रतौ मुकुटशब्दस्याग्रे मणिशब्दोऽपि प्राप्यते[2]।

इण्डिया-आफिस पुस्तकालयलन्दनस्य सूचीपत्रे प्रस्तुतस्य रागकाव्य-विषयकस्य विवरणेन प्रतीयते यत् सुदूरे-आन्ध्रप्रदेशेऽस्य रागकाव्यस्य प्रचार आसीत्। इण्डिया-आफिसस्थिता प्रतिस्तेलुगुलिप्या देवनागर्या लिखितास्ते[2]। प्रस्तुतकाव्यस्य सम्पादन टीकासहितामत्यन्तशुद्धा सुपाठ्या चैका हस्तलिखिता प्रति मुख्यमाधार मत्वाऽक्रियत। पाठनिर्धारणे यत्र तत्र काठिन्ये जाते सति वारा-णसेयसस्कृतविश्वविद्यालयस्य सरस्वतीभवनपुस्तकालये सुरक्षिताभ्य पूर्णाभ्य-स्तथा चापूर्णाभ्यश्च प्रतिभ्य साहाय्य गृहीतमस्ति।

अस्या कृते सम्पादनप्रसगे समये समये सस्कृतविश्वविद्यालय-वाराणस्या-

---

१—दृश्यताम्—इण्डियाआफिसपुस्तकालयसूचीपत्रम्।
पृष्ठम्। १४८०।

२—एतत्कृतेऽपि दृश्यताम्—इण्डियाआफिसपुस्तकालयसूचीपत्रम्।
पृष्ठम्। तदेव।

३—श्रीजयदेवमहाकविनिर्मितमद्भुतभूधरगीतम्।
हरतु मल सकल पठतामनिश प्रकरोतु विनीतम्॥
पृष्ठम्। ७३।

पुस्तकालयाध्यक्षात् पण्डितलक्ष्मीनारायणतिवारीमहोदयात्, श्रीतारिणीशझामहाभागात्, प्रयागविश्वविद्यालयसंस्कृतप्राध्यापकात् डा० सुरेशचन्द्रपाण्डेयात्, डा० शिवशङ्करत्रिपाठिनस्तथाऽन्येभ्योयत् साहाय्यमुपलब्ध, तदमून् सर्वान् प्रति कृतज्ञता वहामि। भूमिकाया सुव्यवस्थितरूपापादने संस्कृतभाषाया सुप्रसिद्धविदुष श्रीगणेशरामशर्मणो मुख्य साहाय्यमास्ते। एतदर्थमह शर्मणोऽस्य कृतज्ञोऽस्मि।

प्रस्तुत काव्य कवेरेव शब्देषु तुलसीमालया[1] सुशोभितेभ्यो भगवतो रामस्य भक्तेभ्य[2] साधुनिचयेभ्यो[3] मोदावह तु स्यादेव साकमेव काव्यकलाप्रणयिनामपि कृतेऽमन्दानन्दसन्दोहजनक स्यादिति मे द्रढीयान् विश्वास।

सीतापतेर्भगवतो रामस्य कृपाया एव फलमिदमास्ते यत्तदिद काव्य कथमप्यह प्रकाशयितुमपारयम्। अन्ते च कवेरेव पदाना स्मृत्या सह तामिमा भूमिका समाप्ति नयामि—

जय रामचन्द्र! कमलाविहार!
जय कोशलेश! करुणावतार!

गीताजयन्ती
प्रभातशास्त्री
२०३१ वै०

---

१—मन्दारमल्लीकुन्दतुलसीदामसवलितम्।
श्रीवत्सचिह्नितवक्षस स्वर्णोपवीतचितम्॥
—पृष्ठम्। ५३।

२—सुखयतु रामभक्तमतिमुदितम्। श्रीजयदेवकवेरिदमुदितम्।
—पृष्ठम्। ८६।

३—श्रीजयदेवविनिर्मितगानम्। सुखयतु साधुनिचयमनुमानम्॥
—पृष्ठम्। ८२।

# अनुक्रमः

। श्रीः ।

। श्री ग णे शा य न म ।

। श्रीरामचन्द्राय नम ।

अथाऽपवर्गादिसमस्तपुरुषार्थसाधनोत्कृष्टतरश्रीमद्रामचन्द्रगुणविवर्णने महति कर्मण्यन्तरायो मा भूयादिति हेतुना श्रीजयदेव स्वेष्टदेवतानुध्यानरूपमङ्गलमाचरति—

गणाधीश नमस्कृत्य नमस्कृत्याथ वै गुरून् ।
कुर्वे श्रीमद्रामगीतगोविन्दार्थविवर्णनम् ॥

श्याम सहासवदन सरसीरुहाक्ष,
केयूरकुण्डलकिरीटविराजमानम् ।
कामाभिराममुरुमौक्तिकदामदीप्त,
पीताम्बर किमपि धाम विचिन्तयाम· ॥ १

वय किमप्यनिर्वचनीय धाम तेज विचिन्तयाम विभावयाम । किम्भूत तेज—श्याम श्यामवर्णम् । पुन किम्भूतम्—सहास वदन यस्य तत् । पुन किम्भूतम्—सरसीरुहाणीव अक्षीणि यस्य तत् । पुन किम्भूतम्—केयूराश्च कुण्डलानि च किरीटानि च तैर्विराजमान विशिष्टतया शोभमानम् । अत्र

विशब्दो ह्यानन्त्यसूचक । 'सहस्रशीर्षा पुरुष सहस्राक्ष सहस्रपात्' इत्यादि-श्रुत्यनुरोधात् । पुन किम्भूतम्—कामाभिराम कामवदभिराम कामाभिरामम् । यद्वा—कामेन यथेष्टाऽभिलाषेणाऽभिरमन्ते योगिनोऽस्मिन्निति कामाभिरामम् । अनेनैतद्धामोपासकेषु कालस्याप्यसामर्थ्य सूचितम् तत्र यथेष्टाभिरमणत्वात् । पुन किम्भूतम्—उरु महच्च तन्मौक्तिक दाम माला तेन दीप्त प्रकाशितम् । पुन किम्भूतम्—पीताम्बर पीत पीतवर्णम् अम्बर वासो यस्य तत् पीताम्बरम्, तडिदाभवसनमित्यर्थ । 'आश्रये तेजसि प्रोक्त धाम धरणिकिरणयो' इति विश्व । १

अथैव ध्यात्वाऽतिभक्तवत्सलतया स्वे हृद्युज्जिहानैतद्ग्रन्थप्रतिपाद्यदेवता श्रीरामचन्द्र प्रणमति—

ससारसागरतरीकृतनामधेय,<br>
ध्येय समाधिरसिकैर्मुनिभि सदैव ।<br>
दैव विनाऽपि ददत श्रियमानतेभ्यो,<br>
वन्दे विभु रघुपर्ति करुणैकसीमम् । २

ससरण ससार अनवधित्वात्स एव सागर तस्मिन् तरीकृत तरीभूत नाम एव नामधेय राम इति द्व्यक्षर नाम यस्येति ससारसागरतरीकृत-नामधेयम् । अनेन रामरामेति जप्त्वाऽविगणितशबर्यादिपापजीवा ससार गोष्पदी-कृत्याऽखण्डानन्दात्मक परब्रह्मोपलभ्याऽद्यापि न निवर्तन्त इति सूचितम् । अत एव समाधौ चित्तैकाग्रतापूर्वकध्याने ये रसिका प्रवीणास्तैर्मुनिभिर्नारदादिभिर्ध्येय ध्यानार्हम् । ननु तर्हि समाधिसामर्थ्यहेतुनाऽत एव कृतार्था इदानीन्तनास्तु तद्ध्या-नाऽशक्यत्वात्तद्विमुखा भवेयुरिति न सदैवेदानी कलिकालेऽपि दैव भाग्य विनाऽपि आनतेभ्य रामरामेति कृत्वा प्रणाममात्रमेव कुर्वद्भ्य श्रिय ददत स्वर्गापवर्गादि-फलप्रदातारम् । अनेनैतत्कालिकेषु तस्याऽतिदयावत्त्व सूचितम् । तत एभिरवश्यमेव ध्येय इति भाव । अत एव करुणैकसीम करुणा दया तस्या एका अव्यभिचारित्वे-

नाऽद्वितीया मीमा मर्यादा यस्मिस्तम् । अनेनैव विधोऽन्यो न कोऽपि दयावानासीन्न भविष्यनीति सूचितम् । अत एव विभु सर्वातिवर्तिनम् । एतद्गुणविशिष्ट रघुपति रघुष्ववतीर्यं सर्व जगत्पातीति त वन्दे प्रणमामि । 'सीमा घाटस्थिति-क्षेत्रेष्वण्डकोशेषु च स्त्रियाम्' इत्यमर । २

एव तावदिष्टदेव प्रणम्याऽथ प्रतिपादनीयग्रन्थसम्प्रदायाविष्करणपूर्वक कवि प्रतिजानीते—

वाल्मीकिनाऽऽद्यकविना शतकोटिसङ्ख्य,
रामायण विरचित शशिमौलिना च ।
काकेन वायुतनयेन तथाऽपरेण,
किञ्चित्करोति जयदेवकविश्चरित्रम् ॥ ३

वल्मीकस्याऽपत्य वाल्मीकिस्तेनैतद्विधेनाद्यकविना आदौ भव आद्य आद्यश्चासो कविस्तेन यच्चरित्र शतकोटिसङ्ख्य यथा स्यात्तथा विरचित विशिष्टतया वर्णितम् । तथा शशिमौलिना च काकेन च वायुतनयेन हनुमता च तथा अपरेणाऽन्येनापि कविना यद्विरचित तदेव चरित्र किञ्चित्सक्षिप्त यथा स्यादेव जयदेवकवि करोति प्रीत्याभिवर्णयतीत्यर्थं । किम्भूत चरित्रम्—रामायणम् रमन्ते क्रीडन्ति योगिनोऽस्मिन्निति रामोऽखण्डानन्दमयब्रह्म तस्यायो निश्चय इति रामाय त नयति प्रापयतीति रामायणम् । यद्वा—रामस्य श्रीमद्रामचन्द्रस्याऽयन रामायणम् । अनेनाद्यतनकाले श्रीमद्रामचन्द्रोऽनन्यरूपत्वेनात्रस्थ एवातस्सर्व परित्यज्यैतदेव पठनीय श्रवणीय मननीयमिति भाव । उक्तञ्च— 'त्वत्कथाऽमृत-पाथोधौ विहरन्तो महामुद । कुर्वन्ति कृतिन केचिच्चतुर्वर्गं तृणोपमम् ।' ३

अथेदानी कवि स्वकीयग्रन्थप्रयोजनमाविष्करोति—

यदि रामपदाम्बुजे रतिर्यदि वा काव्यकलासु कौतुकम् ।
पठनीयमिद तदौजसा रुचिर श्रीजयदेवनिर्मितम् ॥ ४

यदि चेत् स्वकीयगुणोत्कर्षेण रामयत्याह्लादयतीति राम । यद्वा रमन्ते योगिनोऽस्मिन्निति राम तस्य पदाम्बुज तस्मिन् रति स्यात् । यदि वा काव्य-कलासु उत्तममध्यमाधमच्छन्दोविच्चित्यलङ्कृतिविव्वोकहावादिषु कौतुक स्यात् । 'कौतुक चापि क्रीडायामुत्सवे च महत्यपि, इति कोश । तदा इदम् एतदेव काव्य पठनीय पठनार्हमस्तीत्यन्वय । पठनार्हत्वे सहेतुविशेषणद्वयमाह—किम्भूतमि-दम्—ओजसा रुचि राति गृह्णातीति रुचिर रामतेज पराक्रमेण काव्यभावनापरि-पक्वबुद्धीना प्रीतिदमित्यर्थं । पुन किम्भूतम्—श्रीजयदेवेन निर्मितम् । यद्वा—श्रीश्च जयश्च ताभ्या सहितश्चासौ देव श्रीजयदेवो रामचन्द्रस्तत्प्रीतये निर्मितम् । अनेनैतस्यात्युत्तमकाव्यत्वमस्त्यतोऽवश्यमेतदेव-पठनार्हमस्तीति भाव । 'ओजस्तेज -पराक्रमे' इति विश्व । ४

## अथ गीतं प्रथमम्

एव तावदेतन्माहात्म्य निरूप्याथ तत्प्रारम्भ करोति स्मृतिवेदेत्यादिना गीतेन गीतस्यास्य मालवो राग रूपकताल —

**स्मृतिवेदाद्युद्धारक ! जनतारक ! ए ।**
**शंखशमन ! सुरवन्द्य ! जय जय राम ! हरे ! । ध्रुवपदम्**

ए इति सम्बोधने । स्मृतिवेदादीनुद्धारयतीति तत्सम्बुद्धौ हे स्मृतिवेदा-द्युद्धारक ! मनुप्रश्नोत्तरद्वारा मत्स्यपुराणानुकीर्तनेन जनास्तारयतीति तत्सम्बुद्धौ हे जनतारक ! । एतदेव विशिनष्टि—शखस्य शमन तत्सम्बुद्धौ हे शखशमन ! । 'शमनो यमराडचम ' इत्यमर । सुराणा देवाना मध्ये वन्द्य वन्दनार्हं तत्सम्बुद्धौ हे सुरवन्द्य ! । वन्द्यत्वे हेतुमाह—हरति दु खमिति हरिस्तत्सम्बुद्धौ ए हरे ! । एव सर्वथा प्रकारेण रमन्ते योगिनोऽमिन्निति तत्सम्बुद्धौ ए राम ! । जय जय स्वीयोत्कर्षाऽऽविष्करण कुरु कुरु । अत्र द्विरुक्तिर्वीप्सायामस्ति सा द्विधा—आदरद्यो-

तिका भयद्योतिका च । तन्मध्येऽत्रादरद्योतिका ससारतरणहेतुभयाद्भयद्योतिकाऽपि ज्ञातव्या । इति ध्रुवपद प्रतिपदमनुवर्तनत्वात् । १

एव धृतमत्स्यरूप श्रीराम स्तुत्वाऽथ कूर्म स्तौति—

नमदाखण्डलशेखर ! धृतमन्दर ! ए ।
सन्ततजगदाऽऽधार ! जय जय राम ! हरे ! ।। २

नमत् आखण्डलस्य शेखर मुकुट यस्मै तत्सम्बुद्धौ । 'आखण्डल सहस्राक्ष' इत्यमर । अथ तत्प्रयोजनमाह–धृत मन्दरो येनेति तत्सम्बुद्धौ हे धृतमन्दर ! सन्तत सविस्तार च यत् जगत् तस्याऽऽधारोऽधिष्ठानम् एवभूत ए राम ! ए हरे ! जय जयेत्यन्वय । २

अथ वाराह स्तौति–

हेमनयनसहारण ! खलदारण ! ए ।
भुवनानन्द ! मुकुन्द ! जय जय राम ! हरे ! ।। ३

'हृञ्–हरणे' इति स्वार्थिकण्यन्तात् युप्रत्यये कृते सहारयतीति सहारण हेमनयनस्य सहारण तत्सम्बुद्धौ हे हेमनयनसहारण !। एव च दारयतीति दारण खलाना दारण तत्सम्बुद्धौ हे खलदारण !। अत एव भुवनेषु आनन्दो येन तत्सम्बुद्धौ हे भुवनानन्द !। अत एव–'खट्वाङ्गो नाम राजर्षिर्ज्ञात्वेयत्तामिहायुष । मुहूर्तात्सर्वमुत्सृज्य गतवानभय हरिम्' इति स्मृत्वा तथा–'विकर्षतोऽन्तर्ह्रदयाद्दासीपतिमजामिलम् । यमप्रेष्यान्विष्णुदूता वारयामासुरोजसा' इत्यादि वाक्यस्मरण कृत्वा वदति 'डुदाञ्–दाने' एतस्मात् 'आतो ड' इति डप्रत्यये कृते मुना मुहूर्तेन कु कुशल ददातीति मुकुन्द तत्सम्बुद्धौ हे मुकुन्द !। तदेव विशिनष्टि–रमन्ते आर्ता यस्मिस्तत्सम्बुद्धौ ए राम ! ए हरे ! जय जय० । अनेन खट्वाङ्गो यथा मुहूर्तमात्रेणापि कुशलीकृत यथाऽन्तकपाशच्छेदन कृत्वाऽजामिल' कुशलीकृतस्तथा

मामपि कुशलिन कुरु मा चिरमिति सूचितम् । मुकुन्देत्यत्र नामैकदेशेन नामग्रहण कृत यथा भीमो भीमसेन दत्तो दत्तात्रेय इत्यादिवत् 'ब्भ्य' इति सूत्रनिर्देशात् ।३

अथ नरहरि स्तौति—

कनककशिपुतनुधर्षण ! घनकर्षण ! ए ।
धृतजगतीवरभार ! जय जय राम ! हरे ! ।। ४

कनककशिपुतनु धर्षयतीति तत्सम्बुद्धौ कनककशिपुतनुधर्षण ! । अथैतद्रूपातिशयमाविष्करोति घनान्कर्षयतीति तत्सम्बुद्धौ हे घनकर्पण ! । श्रीमद्भागवते यथा—'सटावधूता जलदा परापतन्ग्रहाश्च तद्दृष्टिविमुष्टरोचिष । अम्भोधय श्वासहता विचिक्षिपुर्निर्ह्रादभीता दिगिभा विचुक्रुशु' इति । अथातिमात्रैतद्रूपाक्रान्तेय भू कुतो न शीर्णेत्याशक्याह—धृतेति । सर्वत आकृष्यात्मनैव धृत जगतीवरभारो येनेति तत्सम्बुद्धौ हे जगतीवरभार ! । अनेन भूभारोऽप्यात्मनैव धृत इत्यद्भुतत्व सूचितम् । एव भूत ए राम ! ए हरे ! जय जय० ।४

अथ वामन स्तौति—

चरणसलिलकृतपावन ! बटुवामन ए ।
अजिनदण्डधर, ! देव ! जय जय राम ! हरे ! ।।५

चरणसलिल कृतपावन यस्य तत्सबुद्धौ । बटु कृतयज्ञोपवीतश्चासौ वामनस्तत्सम्बुद्धौ बटुवामन ! । तदेव दर्शयति—अजिनदण्डौ धरतीति तत्सम्बुद्धौ हे अजिनदण्डधर ! इत्यत्राप्यद्भुतत्व दर्शयति—देवेति । दीव्यति बलिप्रभृतीन् दैत्यान् विजिगीषतीति देवस्तत्सम्बुद्धौ हे देव ! । एवम्भूत ए राम ! ए हरे ! जय जय० ।५

अथ परशुराम स्तौति—

क्षत्रियवशनिकन्दन ! भृगुनन्दन ! ए ।
करकोदण्डकुठार ! जय जय राम ! हरे ! ।।६

'कदि क्रदि—नाशने'। निकन्दयतीति निकन्दन क्षत्रियवशस्य निकन्दनस्तत्सम्बुद्धौ हे क्षत्रियवशनिकन्दन ।। अत्राप्यद्भुतत्व दर्शयति–भृगुष्ववतीर्य नन्दयति विश्वमिति तत्सम्बुद्धौ हे भृगुनन्दन ।। करयो कोदण्डकुठारौ धनु परशू यस्येति तत्सम्बुद्धौ करकोदण्डकुठार ।। एवम्भूत ए राम। ए हरे। जय जय०। 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमर । ६

अथ राम स्तौति—

विहितसुजनसम्भावन। जितरावण। ए।
रघुकुलकमलदिनेश। जय जय राम। हरे। ॥७

विहित कृत सुजनाना सम्भावन सम्मानन येन तत्सम्बुद्धौ हे विहितसुजनसम्भावन ।। अथ तत्प्रयोजन दर्शयति जितेति । रावयतीति रावण जित रावणो येनेति तत्सम्बुद्धौ हे जितरावण ।। अत एवाऽनरण्यपुरावृत्तानुसारेण रघुकुलमेव कमल तद्विकाशनाय दिनेश इव भवतीति तत्सम्बुद्धौ रघुकुलकमलदिनेश ।। एवम्भूत ए राम । ए हरे । जय जय०। अनेनास्य कुलदीपकत्व सूचितम् । ७

अथ कृष्ण स्तौति—

मुरचाणूरविनाशक । रिपुशासक । ए।
सिन्धुसुतासञ्चार। जय जय राम । हरे । ॥ ८

मुरचाणूरयोर्विनाशकस्तत्सम्बुद्धौ मुरचाणूरविनाशक ।। रिपून् शास्तीति तत्सम्बुद्धौ रिपुशासक ।। सिन्धुसुतया सह सञ्चारो यस्येति सिन्धुसुतासञ्चार ।। एवम्भूत ए राम । ए हरे । जय जय०। अनेन भौमहननेन्द्रपराभवपारिजातानयनादि सूचितम् । ८

अथ बुद्ध स्तौति—

वेदविहितविधिखण्डन ! सुरमण्डन ! ए ।
दनुजभेदकर ! देव ! जय जय राम ! हरे ! ॥ ९

वेदविहितविधि खण्डयतीति तत्सम्बुद्धौ वेदविहितविधिखण्डन !। सुरान्देवान्मण्डयत्याभूषयतीति तत्सम्बुद्धौ हे सुरमण्डन !। हे दनुजभेदकर ! भेदन भेदो भ्रम दनुजाना भेद करोतीति तत्सम्बुद्धौ । अथैतदेव विशिनष्टि—दीव्यति अतिबलीयसो दनुजादीन्मतिभेदनेनैव जिगीषतीति देवस्तत्सम्बुद्धौ हे देव !। एवम्भूत ए राम ! ए हरे ! जय जय० । ९

अथ कल्किन स्तौति—

यवनविदारण ! दारुण ! हयवाहन ! ए ।
धृतकरवाल ! कराल ! जय जय राम ! हरे ! ॥ १०

यवनान् म्लेच्छान् विदारयतीति तत्सम्बुद्धौ । अत एव हे दारुण। हे हयवाहन !। धृत करवाल खड्गो येन तत्सम्बुद्धौ धृतकरवाल !। अत एव—हे कराल! तद्विनाशाय धृतकालस्वरूप!। एवम्भूत ए राम ! ए हरे ! जय जय० । १०

अथाऽऽगतस्वपुरावृत्तस्मृतिर्भावनया पुरोगतमिव त प्रार्थयति—

श्रीजयदेवविधायक ! युतशायक ! ए ।
कुरु कुशल प्रणतेषु जय जय राम ! हरे ! ॥ ११

श्रीजयदेव विदधाति विशिष्टता नयतीति तत्सम्बुद्धौ हे श्रीजयदेवविधायक !। युतेति । युता जगद्रक्षाया नियुक्ता शायका येनेति तत्सम्बुद्धौ युतशायक !। वाल्मीकीयोत्तरकाण्डे यथा—‘बाणा एव मया मुक्ता इह रक्षन्ति मे प्रजा । तथाऽपि त्व महाबाहो ! प्रजारक्षणतत्पर ।’ एवम्भूत—ए राम ! ए हरे ! जय जय० । ननु किमर्थमेव प्रार्थयसे इति चेत्तत्राह—प्रणतेषु शरणागतेष्वात्मभक्तेषु यद्वा—फलभारेणाऽतिनम्रो वृक्षो यथा विनश्यति तथा स्वकर्मपरिपाकविपाकफलेन ये नता

स्वकर्मफलेन नम्रीभूतास्तेषु कुशल कुरु 'कुशल क्षेममस्त्रियाम्' इत्यमर । ११

इति गीत प्रथमम् ।

एव दशावतारस्तव कृत्वाऽथ साक्षाद्भगवन्त श्रीरामचन्द्र स्तौति—

भूभारभञ्जन ! भवाब्धिवरिष्ठपोत !,
मा पाहि कान्त ! करुणाकर ! दीनबन्धो !।
श्रीरामचन्द्र ! रघुपुङ्गव ! रावणारे !,
राजाऽधिराज ! रघुनन्दन ! राघवेश ! ।। ५

अत्रावतीर्य भूभार भञ्जयतीति तत्सम्बुद्धौ । अनेन बालकाण्डकथाविर्भावो दृश्यते । भवति जन्म यस्मादिति भवो दशरथ अब्धिरिव भवतीत्यब्धि ससार भवादीनामब्ध्युत्तरणाय वरिष्ठपोत इव भवतीति तत्सम्बुद्धौ । अनेनाऽयोध्याकाण्ड० । वने गत्वा शबरीशरभङ्गजटायुरादिषु करुणा करोति तत्सम्बुद्धौ । अनेनारण्यकाण्ड० । दीनाना सुग्रीवादीना बन्धुरिव भवतीत्यनेन किष्किन्धाकाण्ड० । सुन्दरे तु हनुमता भूविवरप्रवेशादिसागरोल्लङ्घनसीताऽन्वेपणादि रामरामेति जपप्रभावेणैव कृतमिति हे श्रीरामचन्द्र हे रघुपुङ्गवेति द्वयेन सुन्दरकाण्ड० । तथा हे रावणारे हे राजाधिराज हे रघुनन्दनेति त्रयेण लङ्काकाण्ड० । ईश्वरत्वेन निरूपणत्वात् हे राघवेशेत्यनेनोत्तरकाण्डकथाविर्भावो दृश्यते । हे कान्तेत्यनेन शूर्पणखाविरूपकरणादि दृश्यते । एव चात्र श्लोके सर्व रामायण पूरितम् । अस्यायमभिप्राय—कदाचिदभिध्यायतो जयदेवस्य हृदयादेष श्लोको बीजाङ्कुर इव बहिर्निर्गत । पुन षट्सर्गस्कन्धोऽनेकगीतश्लोकपल्लवोऽनेककाव्यरचनामयामोदोऽनेकविधैहिकाऽऽनन्दच्छायोऽनेकविधस्वर्गादिफल कल्पद्रुम आसीदिति । ५

रावणाऽभिभवक्लान्ता देवा ब्रह्मपुरोगमा ।
गता क्षीरनिधेस्तीर तुष्टुवु कमलापतिम् ।। ६

रावणात् य अभिभव तेन क्लान्ता क्लिष्टा ब्रह्मपुरोगमा देवा कमलापति तुष्टुवु । किम्भूता —क्षीरनिधेस्तीर गता । ६

## अथ गीतं द्वितीयम्

अथ ब्रह्मादिकृतस्तवो वन्द इत्यादिना गीतेन वर्ण्यते—

गीतस्यास्य वसन्तो राग, प्रतिमण्ठस्ताल ।

वन्देऽरविन्दनयनाऽम्बुदाभ ! ।
कमनीयमूर्तिधर ! पद्मनाभ ! ॥१ ध्रुवपदम्

अरविन्दाविव नयने यस्य तत्सम्बुद्धौ । देवै सह अह त्वा वन्दे । किम्भूत—अम्बुदस्य आभेवाभा यस्य तत्सम्बुद्धौ । अत्राप्यद्भुतत्व दर्शयति—कमनीयमूर्ति धरतीति तत्सम्बुद्धौ । अत्राप्यद्भुतत्व दर्शयति—पद्म नाभौ यस्य तत्सम्बुद्धौ । १

कोदण्डकलाकौतुकनिधान ! ।
पाखण्डविखण्डन ! गरुडयान ! ॥ २

अथ ततोऽप्यद्भुतत्वम् । पुन किम्भूत—कोदण्डकलाकोतुकाना निधानमक्षय-निधिस्तत्सम्बुद्धौ । अनेनैकाद्बीजादेक एवाकुड्रो भवति । भवतो बीजभूतादनेके प्ररोहा बभूवुभवानद्यापि तादृगेवेत्यद्भुतत्व सूचितम् । पुन किम्भूत—पाखण्ड विखण्डयतीति तत्सम्बुद्धौ । पुन किम्भूत—गरुड यान यस्येति तत्सम्बुद्धौ । २

कल्पान्तकोल ! करुणावतार ! ।
कल्याणकमठकृत् ! कर्णधार ! ॥ ३

पुन किम्भूत—कल्पान्ते लयान्ते कोलो भवतीति तत्सम्बुद्धौ । 'कल्प दृढे समर्थे च रचनाया कल्पमुच्यते । कल्प लये तथा रोमनीलकर्मणि भास्वरे' इति हलायुध । 'कोलश्चाधोमुखश्चैव सूकरो यज्ञरोमक' इति विश्व । पुन किम्भूत—करुणया दयया यद्वा—तद्रूपया स्वशक्त्या सहाऽवतारो यस्य तत्सम्बुद्धौ ।

पुन किम्भूत—कल्याणाय कमठरूप करोतीति तत्सम्बुद्धौ । अत एव पुन किम्भूत—कर्णधार इव भवतीति तत्सम्बुद्धौ । 'कर्णधारस्तु नाविक' इत्यमर । ३

इति कमठावतार स्तुत्वाऽथ न साक्षात्कमठोऽसीत्याह—

मायाविलास! नानास्वरूप ! ।
कुन्दाऽऽभदशन! जगदेकभूप ! ॥ ४

मायाविलासेन नानाविधानि स्वरूपाणि यस्य तत्सम्बुद्धौ अथ भाविन श्रीरामचन्द्र स्तौति—कुन्देति । कुन्दपुष्पस्येवाऽऽभा येषा तानि दशनानि यस्य तत्सम्बुद्धौ । पुन किम्भूत—जगति एक अद्वितीयश्चासौ भूपस्तत्सम्बुद्धौ । ४

राजाधिराज ! वीराधिवीर ! ।
रणकर्मकुशल ! बलगुणगभीर ! ॥ ५

राज्ञाम् अधिराज राजाधिराजस्तत्सम्बुद्धौ । अत एव पुन किम्भूत—वीराणामधिवीरस्तत्सम्बुद्धौ । अत एव पुन किम्भूत—रणकर्मणि कुशल प्रवीणस्तत्सम्बुद्धौ । अत एव पुन किभूत—बलेन सहिताश्च ते गुणाश्च बलगुणास्तैर्गभीरोऽगाध तत्सम्बुद्धौ । अत्र मुमागमाभावो वैकल्पिक । ५

त्रिशिर खरदूषण, ! दूषणान्त ! ।
अज! निर्व्यलीक । गोऽतीतकान्त ! ॥ ६

पुन किम्भूत—त्रिशिराश्च खरश्च तौ तयोर्दूषणस्तत्सम्बुद्धौ । पुन किम्भूत—दूषणस्यान्तो नाशकस्तत्सम्बुद्धौ । एव तावद्भावविवर्णनेन रक्षोमारणादिस्वाऽभिप्राय निरूप्याऽथ ब्रह्मत्वेन निरूपयन्ति—पुन किम्भूत—अज ! । अत एव पुन किम्भूत—निर्गत दूरस्थ व्यलीकमसत्यत्व यस्मात्तत्सम्बुद्धौ । पुन किम्भूत—गावो वाण्य वर्णनाऽशक्यत्वेन अतीता निवृत्ता यस्मात् एवम्भूतश्चासौ कान्तस्तत्सम्बुद्धौ । अनेन यथाऽसि तथा वर्णनाऽशक्यत्वाद्वय कथ तव स्तव कुर्म इति सूचितम् । ६

ब्रह्माऽऽदिदेवगणपूज्यपाद ।
विभ्राजमान! विस्मितविषाद! ॥ ७

पुन किम्भूत—ब्रह्माऽऽदिदेवगणैं पूज्यौ पादौ यस्य तत्सम्बुद्धौ । अथ पूज्यत्वे हेतुमाह—पुन किम्भूत—विशेषेण भ्राजमान समष्टिरूपेण वर्तमानस्तत्सम्बुद्धौ । पुन किम्भूत—विस्मितजन विषाद सीताहरणत्यागादिरूपखेदो यस्य तत्सम्बुद्धौ । अत्र मध्यमपदलोपो ज्ञातव्य । ७

एव स्तवनिरूपण कृत्वाऽथ तत्फलस्तव करोति—

जयदेवभणितमयशस्त्रवर्म ।
विदधातु सदा प्रणतेषु शर्म ॥ ८

जयदेवभणितमय च तत् शस्त्रवर्म तत् प्रणतेषु रामाय प्रणाम कुर्वत्सु शम कल्याण विदधातु । ८

इति गीत द्वितीयम् ।

ते देवा केचिन्नानारागतालस्वरादिललितगान्धर्वेणाऽस्तुवन्केचन नानाकाव्यकलाकल्पितहृद्यपद्यैश्चाऽस्तुवन्नित्याशयेनाऽथ तत्कृतमेव स्तव निरूपयति—

कालाम्भोदावभास मणिमयमुकुट कुण्डलोद्भासिगण्ड,
केयूराऽऽपूर्णबाहु कमलमसिगदाशार्ङ्ग शख दधानम् ।
स्मेर कुन्दाभदन्त सुरगणमुनिभिर्वेष्टित चक्रपाणि,
स्फूर्जद्दिव्यासनस्थ हुतवहसदृश देव ! देव नमामि ॥ ७

हे देव ! देव त्वामह नमामि । किम्भूतम्—काले प्रावृषि आगतश्चासौ अम्भोदस्तद्वदवभासतेऽसौ तम् । पुन किम्भूतम्—मणिमय मुकुट यस्य तम् । 'मण्डन चाथ मुकुट किरीट पुनपुसकम्' इत्यमर । कुण्डलोद्भासितौ गण्डौ यस्य तम् । 'अधस्ताच्चिबुक गण्डौ कपोलौ तत्परा हनु' इत्यमर । पुन किम्भूतम्—केयूराभ्याम् आपूर्णा बाहवो यस्य तम् । पुन कि'भूतम्—

कमलमसिगदाशाङ्गंशङ्ख दधानम्। पुन किम्भूतम्—स्मेर सस्मितम्। पुन किम्भूतम्—कुन्दाभा दन्ता यस्य तम्। पुन किम्भूतम्—सुरगणमुनिभिर्वेष्टित नियत-निकटवर्तिसुरादिनिषेवितम्। पुन किम्भूतम्—चक्र पाणौ यस्य तम्। पुन किम्भूतम्—स्फूर्ज्जद्दिव्यासनस्थम्। अत एव हुतवहसदृशम्। अनेन यथाऽग्नौ हवन-शीलस्य पापमेव भस्मीभवति हविरनन्ततामेति तथा त्वद्हुत सुकृतमानन्त्यमेति दुष्कृत नश्यतीति सूचितम्। ७

इति तेषा स्तुती कृत्वा भगवान्भक्तवत्सल ।
प्रादुरासीदयोध्याया कौसल्याया शुभे दिने ॥ ८

भगवान् अयोध्याया कौसल्याया शुभे दिने प्रादुरासीदजनिष्ट। कि कृत्वा—इति पूर्वोक्तास्तेषा ब्रह्मादीना स्तुती श्रुत्वा। किम्भूत—भक्तेषु वत्सल प्रीत। ८

## अथ गीतं तृतीयम्

अथ श्रीमद्रामावतार गुर्जरीरागेण रूपकतालेन रम्यबालरूपमित्यादिना गीतेन वर्णयति—

रम्यबालरूप राममभिराममहमीडे।
रावणाऽभिभवपरितप्तसुरसिद्धगण—
याचित जयति वरमीडे १ ॥ ध्रुवपदम्

अत्र सप्तमपदेन सहान्वय इति ज्ञेयम्। कौसल्या तदा इति अवदत्। तदा कदा—यदा रावणेन कृतश्चासावभिभवस्तेन परितप्ताश्च ये सुर-सिद्धगणास्तैर्याचितम् ईडे वर जयति स्मोत्कर्षेणाविर्बभूव। यद्वा—किम्भूत रामम्—जयति सर्वोत्कृष्टे ईडे स्तव्यपदार्थे वर सर्वोत्कृष्टतरम्। ईड—स्तुतौ इत्यस्मात् 'घञर्थे क' इत्यनेन कप्रत्यये कृते ईडयते ईड स्तव्यपदार्थ। 'वर च वपुषि श्रेष्ठ ऊढे वर इहेष्यते' इति विश्व। इति किमवदत्—हे केशव! राम

त्वामहम् ईडे स्तौमि । किञ्च—त्व मा त्राहि अव्या । किञ्च—अद्भुतमलौकिक रूप जहिहि माऽऽविष्कुरु । अनेन यथा दरिद्रो यदृच्छाप्राप्त धनमाविष्कर्तु नेच्छति तथा साऽपीति सूचितम् । कि कृत्वा—वीक्ष्य किम्भूतम्—अभिरामम् ।१

इन्द्रनीलाभतनुमतनुशतकोटिरुचिमिन्दुमुखचन्द्रमुरुहारम् ।
कौस्तुभाऽमुक्तकन्धरमरुणपाणिपदमम्बुरुहनयनमलितारम् ॥२

पुन किम्भूतम्—इन्द्रनीलाभा तनुर्यस्य तम् । पुन किम्भूतम्—अतनु कामस्तस्मात् शतकोटिगुणा रुचिर्यस्य तम् । पुन किम्भूतम्—इन्दुमुखम्, चन्द्र-माह्लादक यस्य तम् । पुन किम्भूतम्—उरुर्महान् हारो यस्य तम् । पुन किम्भूतम्—कौस्तुभेन अमुक्ता एवम्भूता कन्धरा ग्रीवा यस्य तम् । पुन किम्भूतम्—अरुणौ पाणिभि सह पादौ यस्य तम् । पुन किम्भूतम्—अम्बुरुहे इव नयने यस्य तम् । पुन किम्भूतम्—अली इव तारे अक्षिकनीनिके यस्य तम् । 'अलि स्याद् भ्रमरे भक्तौ स्यादालिश्च सखीजने' इति विश्व । २

कम्बुनिभकण्ठमतिनीलचिकुरावलिविजितजलवाहसङ्घातम् ।
गूढतरजत्रुमाजानुभुजदण्डधरमुरसि भृगुचरणजलजातम् ॥३

पुन किम्भूत रामम्—कम्बुनिभ कण्ठो यस्य तम् । पुन किम्भूतम्—अतिनी-लाश्च ये चिकुरा केशास्तेषा या आवलि पङ्क्तिस्तया विजित जलवाहसघातो येन तम् । 'चिकुर कुन्तलो बाल कच केश शिरोरुह' इत्यमर । पुन किम्भूतम्—गूढतरे जत्रुणी यस्य तम् । जत्र्वादयो निपात्या । 'अस्थिभेदे च जत्रु स्यान्नाडिकासु विशेषत' इति विश्व । 'स्कन्धो भुजशिरोऽसोऽस्त्री सन्धी तस्यैव जत्रुणी' इत्यमर । पुन किम्भूतम्—आजानु च ते भुजदण्डास्तान् धरतीति । पुन किम्भूतम्—उरसि भृगुचरणजलजात यस्य तम् । ३

विविधमणिचित्रहेमाऽऽभरणभूषित हेतिसविहितजयगानम् ।
मन्दमन्दस्मित बन्धुजीवाऽधर पन्नगाऽमित्रवरयानम् ॥४

पुन किम्भूतम्—विविधमणिचित्राणि च तानि हेमाऽऽभरणानि तैर्भूषितस्तम् । पुन किम्भूतम्—हेतिना चक्रेण सविहित सम्पादित जयगान यस्य तम् । पुन किम्भूतम्—मन्दमन्दस्मितम् । पुन किम्भूतम्—बन्धुजीव बन्धूकपुष्प तद्वदधरौ यस्य तम् । पुन किम्भूतम्—पन्नगाऽमित्रो गरुड स एव वरयान यस्य तम् । ४

कनकमयपट्टमण्डितललाटस्थल कुन्दकुड्कुमाभरदभासम् ।
रुचिरमखसूत्रभृतमिन्दिरासकुल पीतकौशेयशुभवासम् ।।५

पुन किम्भूतम्—कनकमयपट्टेन मण्डित ललाटस्थल यस्य तम् । पुन किम्भूतम्—कुन्दकुड्कुमाभा रदभा दन्तभा यस्य तम् । पुन किम्भूतम्—रुचिरतरमखसूत्र मनोज्ञयज्ञोपवीत बिभर्तीति तम् । पुन किम्भूतम्—इन्दिरया लक्ष्म्या सड्कुलस्सम्पन्नस्तम् । अनेन श्रीरामावतारप्रभावत सर्व तद्गेहराष्ट्रादिक च रमाक्रीडमभूदिति सूचितम् । पुन किम्भूतम्—पीते कौशेये कृमिकोशोद्भवे वाससी यस्य तम् । ५

सुखदनासापुट शीलकरुणाऽऽकर सत्यसकल्पमहितल्पम् ।
दानवानीकमत्तेभपञ्चानन विहितपलदिवसयुगकल्पम् ।।६

पुन किम्भूतम्—सुखदे नासापुटे यस्य तम् । पुन किम्भूतम्—शील च करुणा च तयो आकरस्तम् । 'खनि स्त्रियामाकर स्यात्' इत्यमर । पुन किम्भूतम्—सत्य सङ्कल्पो यस्य तम् । पुन किम्भूतम्—अहिस्तल्प यस्य तम् । पुन किम्भूतम्—दानवानीकेषु ये मत्तेभा इव भवन्ति तेषा वधाय पञ्चाननस्तम् । 'सिहो मृगेन्द्र पञ्चास्य' इत्यमर । पुन किम्भूतम्—विहिता सम्पादिता पलदिवसयुगकल्पा येन तम् । यद्वा—'हि—गतौ वृद्धौ च' इति विहिता व्यतीता अथवा—वृद्धा पलदिवसयुगकल्पा यस्य तम् । यद्वा—'धाञो हि किति ते' इति धाञ प्रयोगे विहिता धृता पलदिवसयुगकल्पा येन तम् । अनेन कालोऽपि त्वमेवेति सूचितम् । ६

कोशलाऽधीशजायादिशिशुशोकहरमद्भुत वीक्ष्य कौसल्या ।
अवददिति रूपमधुना जहिहि केशव! त्राहि मामपगतशल्या ।। ७

पुन किम्भूतम्--कोशलाधीशजायादीना शिशुशोकहरस्तम् । किम्भूता कौसल्या—अपगत शल्य यस्या सा । 'शल्य छिद्रे च बाणे च शल्य च विषकण्टके । व्याधौ शल्यमिति प्रोक्त प्रसूताया विशेषत, इति हलायुध । स्पष्टमन्यत् । ७

पठति यो ज्ञानमज्ञानतिमिरापह वैष्णव त्रिजगदतिसारम् ।
भावुक चारु जयदेवकविनिर्मित यानि भवसिन्धुपरपारम् ।। ८

य पुमान् जयदेवकविनिर्मितम् इद गीत पठति स भवसिन्धुपरपार याति । तत्र हेतुमाह—किम्भूत गीतम् ज्ञान ज्ञानद ज्ञानेनैव मुक्तिरिति भाव । ऋते ज्ञानान्न मुक्ति इत्यादिश्रुते । तदेव पुन किम्भूतम्—अज्ञान-तिमिरापहम् । पुन किम्भूतम्—वैष्णव विष्णुवर्णनात्मकम् । पुन किम्भूतम्—त्रीणि च तानि जगन्ति तेषु अतिसार सारतमम् । पुन किम्भूतम्—भावुक क्षेमरूपम् । 'भावुक भविक भव्य कुशल क्षेममस्त्रियाम्' इत्यमर । ८

इति गीत तृतीयम् ।

अवतारभेदान्निरूपयति—

कैकेय्या भरतो जज्ञे सुमित्राया यमौ सुतौ ।
शत्रुघ्नलक्ष्मणौ नाम शरदिन्दुनिभाननौ ।। ९

यमौ द्वौ । शरदिन्दुनिभ शरच्चन्द्रसदृशम् आनन ययोस्तौ शारदिन्दुनिभाननौ। स्पष्टमन्यत् । ६

निदध्वनुर्दुन्दुभय समन्ताज्जगुश्च गन्धर्वगणा प्रवीणा ।
वन सपुष्प सरिदम्बुपूर्णाऽस्यरा धरित्री विमल नभश्च ।। १०

दुन्दुभय समन्ताद्दिवि भूमौ च निदध्वनुरवाद्यन्त । च पुन प्रवीणा निपुणा गन्धर्वगणा जगुरगायन् । च पुन वन सपुष्पमासीत् । च पुन सरित् अम्बुसम्पदा

पूर्णा अम्बुपूर्णा आसीत् । च पुन धरित्री अस्यरा आसीत् । 'षो—ऽन्तकर्मणि' स्यत्यङ्गवैवर्ण्यजर्जरीभावरूपान्तकर्म करोतीति विग्रहे 'दृशादे श' इति शप्रत्यये कृते 'दिवादेर्य' इति यप्रत्यये तदनु 'य्यो' इत्योकारलोपे स्य इति सिद्धम् । तदनु स्य राति गृह्णातीति विग्रहे 'आतो ड' इति ड प्रत्यये स्यरेति सिध्यति । न स्यरा अस्यरा पुनर्नवीना । यद्वा—साना सदानन्दश्रीवनधन-यौवनवस्तुवृन्दाना भाव स्यम्, स्य रातीति स्यरा आसीत् । अनेन येय धरित्री पूर्व रक्षोभयान्निरानन्दाऽऽसीन्निरानन्दत्वान्नि श्रीकाऽऽसीत्तथा निर्वना निरोषधिवना चासीत् निर्धना चासीत् । निरानन्दत्वेन नि श्रीकत्वेन निर्वनत्वेन च निर्यौवनाऽऽ-सीत् । निर्यौवनत्वाच्च या निर्वस्तुवृन्दाऽऽसीत् सैव धरित्री श्रीमद्रामचन्द्रावतार-प्रभावात् सदानन्दवती श्रीमती वनधनयौवनवती वस्तुवृन्दवत्यासीदिति सूचितम् । 'वृषे च स सदानन्दे सा श्रिया स वन धनम् । यौवनेऽपि समाख्यात वस्तुवृन्दे समाहृतम् ।' इति नाममालिकायाम् । नभ विमलम् आसीत् । १०

## अथ गीतं चतुर्थम् ।

अथ कदाचिदयोध्याप्रतोलीषु विचरन्त श्रीरामचन्द्र प्रति नागरिकोक्ति—आशावरीरागेण रूपकतालेन रामवदनमित्यादिना गीतेन वर्ण्यते—

रामवदनमतिमञ्जु विलोकय ।
शारदकोटिशशिनमिव निर्मल-
मक्षिचकोर रोपय ।। ध्रुवपदम्

मञ्जुमतिक्रम्य भवतीत्यतिमञ्जु व्यादत्तनेत्र विलोकय । तत्प्रयोजनमाह—शारदात्कोटिगुणश्चासौ शशी तमिव निर्मल रामवदनम् अक्षिचकोर रोपय । १

भृकुटीकुटिलधनुर्वलित नवकुङ्कुमतिलकललाटम् ।
सुहृदयहृदयविशोककर करुणामयनयनविपाटम् ।।२

किम्भूत रामवदनम्—कुटिल च यद्धनु तस्येव वलिते भृकुटचौ कुटिलधनुर्व-

लिते यस्मिन् तत् । अनेनैतच्छ्रीराममुख स्वभ्रूभङ्गमात्रेणैव सर्वथा सर्व जयतीति सूचितम् । पुन किम्भूतम्—नवकुङ्कुमतिलकललाटम् । पुन किम्भूतम्—सुष्ठु हृदय येषा तेषा यद्धृदय तस्य विशोककरम् । पुन किम्भूतम्—करुणामय नयन-विपाट नेत्रोन्मीलन यस्मिन् तत् । २

क्षीरपयोनिधिवीचिविनिन्दकविशदमनोहरहासम् ।
कुन्दकुसुमकमनीयलसद्दशनावलिकिरणविकाशम् ॥३

पुन किम्भूतम्—क्षीरपयोनिधिर्वीचिविनिन्दक विशद मनोहर हासो यस्य तत् । पुन किम्भूतम्—कुन्दकुसुमकमनीया लसन्तश्च ये दशना दन्तास्तेषा ये आवली पङ्क्ती तयोर्ये किरणमयूखास्तेषा विकाशो यस्मिस्तत् । ३

नागलतारसरागधराधरपल्लवमयहृदि हासम् ।
कीरमुखाकृतिधीरसुगन्धसमीरणनासाऽऽवासम् ॥४

पुन किम्भूतम्—नागलतारसरागधरौ च यौ अधरपल्लवौ तन्मय तत्प्रतिभा-विकारापन्न हृदि हासो यस्य यत् । पुन किम्भूतम्—कीरमुखस्य शुकतुण्डस्या-कृतिरिवाकृतिर्यस्य धीरो मन्द सुगन्ध सौगन्ध्ययुक्त समीरण पवनो यस्यैवम्भूत नासाऽऽवासो नासिकाकारो यस्मिस्तत् । ४

नानारत्नविचित्रहिरण्मयमुकुटविभागमतोलम ।
मकराकारकनककुण्डलयुगचलनविभासिकपोलम् ॥५

पुन किम्भूतम्—नानारत्नविचित्र हिरण्मय च तन्मुकुट तेन विधिना चासौ भाता गच्छतीति तत् । अनेनैतस्यानेकभात्व सूचितमतो यथाऽस्ति तथा वर्णयितु न शक्यत इति भाव । तदेवाह—पुन किम्भूतम्—अतोलम् । 'तुल—उन्माने' उन्मान तोलनम् । तुल्यते उपमीयते इति विग्रहे 'घञ् भावे' अनेन घञि कृते तोलमिति सिद्धम् । न तोलम् अतोलम् । अनुपमेयमित्यर्थं । पुन किम्भूतम्—मकराकारे कनकनिर्मिते च ये कुण्डले तयोर्यत् युग तस्य यच्चलन कम्पन तेन विभासिनौ

नानात्वेन शोभमानौ कपोलौ यस्य तत । 'गण्डौ कपोलौ' इत्यमर । 'कर्णिका तालपत्र स्यात्कुण्डल कर्णवेष्टनम्' इत्यमर ।५

कम्बुरुचिरतरकण्ठभृदम्बुदनीलविजृम्भितकेशम् ।
रघुकुलकैरवकाननियतविकाशकचारुनिशेशम् ॥ ६

पुन किम्भूतम्—कम्बुरुचिरतरकण्ठ बिभर्ति इति तत् । पुन किम्भूतम्—अम्बुदवत् नीला विजृम्भिता कुटिला केशा कुन्तला यस्मिस्तत् । पुन किम्भूतम्—रघुकुलमेव कैरवकानन कुमुदवन तस्य नियतविकाशक उद्बोधक चारुनिशेश पूर्णचन्द्रो भवतीति तत् ।६

मङ्गलमोदकर सुचिर निजभक्तसतामनुकूलम् ।
लोकचतुर्दशपालनदक्षमपक्षविनाशमतूलम् ॥ ७

पुन किम्भूतम्—मङ्गलमोदकरम् । पुन किम्भूतम्—सुचिरमनाद्यन्तम् । पुन किम्भूतम्—निजभक्ताश्च ये सन्तस्तेषामनुकूल तदधीनम् । पुन किम्भूतम्-लोकाश्च ये चतुर्दश तेषा यत्पालन तस्मिन्दक्ष निपुणम् । पुन किम्भूतम्—अपक्षान् शत्रून् विनाशयतीति तम् । अनेनैतद्भ्रूभङ्गमात्रेणैव रावणादिनाशो भविष्यतीति सूचितम् । यद्वा—अपक्षान्पक्षरहितानानाथान्सुग्रीवशबरीविभीषणादीन् विशेषता नयतीति अपक्षविनम् आ समन्तात् शम् आशम् अपक्षविन च तत् आश च अपक्षविनाशम् । अनेन यथा सुग्रीवशबरीविभीषणादीन् विशिष्टता नेष्यति एषा च यथा श करिष्यति तथाऽस्मानपि विशिष्टतां नेष्यति अस्माकमपि श करिष्यतीति सूचितम् । अत सादरावलोकन कुरुतेति भाव । पुन किम्भूतम्—अतूलम् 'तूल—निष्कर्षे' निष्कर्षो निष्कोषण तच्चान्तर्गतस्य बहिर्निसारणम् । तूलतीति तूलम् । अस्याग्नेस्तूल निस्सारकमुत्पत्तिस्थानम् अतूलम् । 'मुखादग्निरजायत' इति श्रुते । 'अ शिवे केशवे वायौ ब्रह्मचन्द्राग्निभानुषु' इत्यक्षरमालिका । 'श्व श्रेयस शिव भद्रम्' इत्यमर ।७

श्रीजयदेवकवेरिदमुदयति हरिचरणस्मृतिसारम् ।
सुखयतु साधु जन सतत किल शमयतु विषयविकारम् ॥८

श्रीजयदेवकवे इद गीत हरिचरणस्मृतिसार प्रति उदयति अत्युत्कृष्टमस्ति अत जन साधु यथा स्यात्तथा सुखयतु विषयविकार शमयतु नाशयतु ।८

इति गीत चतुर्थम् ।

अथ तत्पितु सौभाग्यमाह—

रराज भूपति पुत्रैश्चतुर्भिर्गुणशालिभि ।
भुजैरिवास्त्रकुशलैर्भगवान्भक्तवत्सल ॥ ११

भूपतिर्दशरथ गुणशालिभिर्नानागुणोत्कृष्टैश्चतुर्भि पुत्रै रराज शोभितवान् । कै क इव—भुजैर्भगवानिव श्रीविष्णुरिव । किम्भूतो भगवान् भक्तेषु वत्सल प्रीत भक्तवत्सल । किम्भूतै पुत्रै अस्त्रकुशलै अस्त्रप्रवीणै । ११

एव पृथङ् निरूप्याऽथ सावतारभेद निरूपयति—

मणिचित्रकिरीटधारिणो धनुरिष्वाशिविभासिपाणय ।
शरदिन्दुनिभानना बभुस्तनया भूमिभुजो महौजस ॥ १२

भूमिभुजो नृपस्य दशरथस्य तनया पुत्रा बभु शुशुभु । किम्भूता—मणिचित्रकिरीटधारिण । पुन किम्भूता—अश्नाति शत्रूनित्याशिश्चक्रम् अत्र 'वपादेरिञ्' इति सिद्धि । विभश्चासौ असि विभासि । धनुश्च इषुश्च आशिश्च विभासिश्च ते पाणिषु येषा ते । पुन किम्भूता—शरदिन्दुनिभानि शरच्चन्द्रसदृशानि आननानि येषा ते । पुन किम्भूता—महत् ओजो येषा ते । 'ओजस्तेज पराक्रमे' इति विश्व । १२

अथास्यैव लीला विवुर्वुर्विश्वामित्राऽऽगमन निरूपयसि—

सुबाहुमुख्यै रजनीचराद्यैरुपप्लुतो गाधिसुतो महर्षि ।
अगादयोध्या नृसहस्रसङ्कुलां शिष्यायुतै पूरितपार्श्वभाग ॥१३

सुबाहुर्मुख्यो येषु तै । रजनीचराद्यैर्नानारक्षोभेदै उपप्लुत उपद्रुत महर्षिर्गाधिसुतो विश्वामित्र अयोध्याम् अगाद् गतवान् । किम्भूत— शिष्यायुतैरयुतश शिष्यै पूरितपार्श्वभाग पूर्णपार्श्व । किम्भूतामयोध्याम्— नृसहस्रमङ्कुलाम् । १३

ननाम साकेतनृपो महर्षये कृताञ्जलि पादपयोजयोर्द्रुतम् ।
निवेशयामास सुतौ मनोहरौ प्रसन्नचित्त प्रबभूव योगवित् ।। १४

साकेतनृप अयोध्यापतिर्दशरथ महर्षये ननाम सुतौ पादपयोजयोर्द्रुत शीघ्र निवेशयामास तस्य शेष । तदा योगवित् प्रसन्नचित्त प्रबभूव ।

## अथ गीतं पञ्चमम् ।

अथ विश्वामित्रो रामहस्त स्पृशन्नाह दशरथम् । मालवरागेण रूपकतालेन रामचन्द्रेत्यादिना गीतेन—

रामचन्द्रकरकमलमुदारम् ।
भज भजनीयममलमतुलित-
रुचिदमितदनुजपरिवारम् ।। १ ध्रुवपदम्

हे राजन् ! रामचन्द्रकरकमल भज सर्वमेतल्लीलैवेति बुद्धया सेवस्व । किम्भूतम्—उदार यथेष्टम् । पुन किम्भूतम् — भजनीय भजनार्हम् । भजनार्हत्वे हेतु । पुन किम्भूतम्—अमल स्फटिकवन्निर्मलम् । अनेन स्फटिको यथाऽधिष्ठानरागाधीनतामेति तथेदमपि भक्तानुरागतामेत्यतोऽवश्य भजनीयमिति भाव । पुन किम्भूतम्—अतुलिता अपरिमेया रुचिर्यस्य तत् । पुन किम्भूतम् शमित दनुजपरिवारो येन तत् । १

धृतकोदण्डविशिखमणिभूषणमरुणमनोहरवेषम् ।
भागधेयसूचकविशुद्धतरविविधवर्णशुभरेखम् ।। २

पुन किम्भूतम्—धृतानि कोदण्डविशिखमणिभूषणानि येन तत् । 'पृपत्क-बाणविशिखा अजिह्मगखगाशुगा' इत्यमर । पुन किम्भूतम्—अरुण मनोहर वेषो यस्य तत् । पुन किम्भूतम्—भागधेयसूचका विशुद्धतरा विविधवर्णा अनेकधा वर्णनार्हा शुभा रमणीया रेखा यस्मिन् तत् । २

स्फुरदङ्गुलिनखराजिविराजितममरनिकरकृतरागम् ।
मुक्तादलभूषितदलसङ्कुलसरसिजमिव वरभागम् ।। ३

पुन किम्भूतम्—स्फुरन्ती दीप्तिमती चासौ अङ्गुलीनखराजिस्तया विराजि-तम् । पुन किम्भूतम्—अमरनिकरैर्देवसमूहै कृत रागो यस्मिस्तत् । पुन किम्भूतम्—मुक्तादलैर्भूषित दलै पत्रै सङ्कुल सम्पन्न च तत्सरसिज तदिव । 'मुक्तास्फोटे प्रवाले च मुक्ता मुक्तगतौ स्मृत' इति हलायुध । 'दल पत्रे च खण्डे च दल राजबलेऽपि च' इति विश्व । पुन किम्भूतम्-वरा उत्कृष्टा चासौ भा ता गच्छतीति तत् । 'स्यु प्रभा रुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तय' इत्यमर । ३

तदेव विशिनष्टि—

वरमभीष्टमभय दददद्भुतमाजिकलासुपवीनम् ।
अरिषड्वर्गमधुपमदगञ्जनमनुपममञ्जनहीनम् ।। ४

पुन किम्भूतम्—अभीष्टमभिलषितम् अभयम् भयरहित वर ददत् । पुन-किम्भूतम्—अद्भुतम् । ननु किमत्राद्भुतत्वमिति चेत्तत्राह—पुन किम्भूतम्—आजये समराय कलन्ति गच्छन्तीत्याजिकला स्वकीयपरकीयवीरा तेषु स्वकीयानाम् असुरिव प्राण इव प्राणो यथा नस्यधिष्ठायेन्द्रियाद्यात्मबल रक्षति तद्वत् । परेषा पवीनाम् इन पवीन स इव वज्रराज इव । समरे विमुक्त वज्र यथा कमपि शत्रु न मुञ्चति तद्वत् । 'इन सूर्ये प्रभौ राजा मृगाङ्के' इत्यमर । 'ह्लादिनी वज्रमस्त्री स्यात्कुलिश भिदुर पवि । शतकोटि स्वरु शबो दम्भोलिरश-

निर्द्वयो ’ इत्यमर । अरीणा ये षड्वर्गास्त एव मधुपा भ्रमरास्तेषा मदगञ्जन हर्षनाशकम् । अन्यस्मिन्कमले भ्रमराणा हर्षवृद्धिरस्त्यत्र तदन्यथात्व दृश्यते इत्याश्चर्यम् । षड्वर्गो यथा—उपाय साधनोपायो विभागो देशकालयो । विनिपात प्रतीकार सिद्धिश्च—इति । पुन किम्भूतम्—अनुपमम्—अञ्जनहीन निरञ्जन तत्तत्कर्मफलशून्यम् । ४

धर्मादिकफलनमितमहर्निशमजशङ्करमुनिगीतम् ।
कमलापाणिकमललालिततममसुरविघातविनीतम् ।। ५

पुन किम्भूतम्—अहर्निश धर्मादिकफलनमित धर्मार्थकाममोक्षप्रदानाय सदैवाधोमुखम् । तत्र प्रमाणयति—पुन किम्भूतम्—अजश्च शङ्करश्च मुनयश्च तैर्गीत प्रीत्योद्गीयमानम् । पुन किम्भूतम्—कमलापाणिकमलैर्लालितंतम कृतातिलालन तत् । पुन किम्भूतम्—असुराणा विघाते विनीत इव शिक्षित इवेति तत् । ५

कपिलादिकसनकादिनिषेवितमशुभशमनमतिभारम् ।
वेदपुराणसकलसम्मतमिव सादितविषमविकारम् ।। ६

पुन किम्भूतम्—कपिलादिकाश्च सनकादयश्च तैर्निषेवित प्रीत्याभिध्यात तत् । पुन किम्भूतम्—अशुभशमनम् । पुन किम्भूतम्—अतिक्रान्त भारो येन तदतिभार भारहरम् । यद्वा—अतिशया चासौ भा ता राति ददातीति तत् । पुन किम्भूतम्-वेदपुराणाना सकल कलासहित सम्मतमिव सिद्धान्त इव । पुन किम्भूतम्—सादिता विच्छिन्ना विषया विकारा येन तत् । ६

चिन्तामणिसुरधेनुकल्पतरुकोटिदानगुणशीलम् ।
प्राकृततत्त्वप्रपञ्चरोगहरमखिलचराचरलीलम् ।। ७

पुन किम्भूतम्–चिन्तामणिश्च सुरधेनुश्च कल्पतरुश्च ते तेभ्य कोटिगुण दानगुणशील दानकर तत् । पुन किम्भूतम्–प्राकृतो यो तत्त्वाना प्रपञ्चस्स एव

रोगस्त हरतीति तत् । पुन किम्भूतम्—अखिलाश्च ये चराचरास्तेपु लीला यस्य तत् । ७

श्रीजयदेवभणितमतिमञ्जुलमधुरमनोहरगानम् ।
दिशतु सदा मङ्गलमतुलितमिति परमानन्दनिधानम् ।। ८

इतीद श्रीजयदेवभणित सदा अतुलितमपरिमित मगल दिशतु ददातु । किम्भूतमिद जयदेवभणितम्—अतिशयेन मजुल मधुर मनोहर गान यस्मिस्तत् । अत्र त्रिवार माधुर्योपपादनेन मुक्तमुमुक्षुविषयिणा त्रयाणामप्येतन्मनोज्ञमिति सूचितम् । श्रीमद्भागवते यथा— 'निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोभिरामात् । क उत्तमश्लोकगुणानुवादात्पुमान्विरज्येत विना पशुघ्नात् ।' इति । पुन किम्भूतम्—परमानन्दस्य निधानमधिष्ठान तत् । ८

इति गीत पञ्चमम् ।

इदानी समग्राङ्ग श्रीराम स्तुवन्प्रार्थयते—

क्षुमापुष्पश्यामो विकचविशदाम्भोजनयन ,
प्रवालोष्ठो बिभ्रद्रुचिरतरकोण्डभिदुर· ।
पृषत्कान्पाणिभ्यामतिविमलमुक्ताफलरदो,
महावीरो धीरो मनसि रघुवीरो निवसताम् ।। १५

रघुवीर श्रीराम मे मनसि निवसताम् । किम्भूतो रघुवीर क्षुमाया यत्पुष्प तद्वत् श्याम । 'अतसी स्यादुमा क्षुमा' इत्यमर । पुन किम्भूत—विकचविशदाम्भोजे इव नयने यस्य स । पुन किम्भूत—प्रवालाविव ओष्ठौ यस्य स । 'मुक्ताथ विद्रुम पुसि प्रवाल पुनपुसकम्' इत्यमर । पुन किम्भूत-रुचिरतरश्चासौ कोदण्डस्तेन भिदुर सुन्दर । 'भिन्नोत्कटे च भिदुर सुन्दरे भिदुर स्मृतम्' इति वैजयन्ती । पुन किम्भूत—पाणिभ्या पृषत्कान्बिभ्रत् । 'पृषत्कबाणविशिखा अजिह्मगखगाशुगा ' इत्यमर । पुन किम्भूत— मुक्ताफलानीव

रदा यस्य स । 'रदना दशना दन्ता रदा' इत्यमर । पुन किम्भूत महावीर । पुन किम्भूत—धीर धृतिमान् ।

अथ विश्वामित्रो दशरथ प्रार्थयते राजेति द्वाभ्याम्—

राजन्ब्रह्ममहर्षिभ्यो राजश्चित्रमिद तप ।
राजन्ते येन रामाद्या ब्रह्मेशा लोकशासिन ॥ १६

हे राजन्! तवेद तप राजब्रह्ममहर्षिभ्यश्चित्रम् आश्चर्यरूपम् । तदेवाह—किमिद तप—येन तपसा रामाद्या राजन्ते त्वयि पुत्रत्वेनावातरन् । किम्भूता रामाद्या—ब्रह्मेशा वेदाऽधिष्ठातृदेवा । पुन किम्भूता—लोकशासिन लोकस्थितिप्रवर्तका । १६

कस्तूरिकाश्यामलचारुवेश किरीटमाभूषितभालदेशम् ।
श्रीरामचन्द्र नृप! देहि मह्य सलक्ष्मण रक्षतु यज्ञमुग्रम् ॥ १७

कस्तूरिकावत् श्यामल श्यामवर्ण चारु मनोहर वेशो यस्य तम् । किरीटस्य या मा लक्ष्मीस्तया भूषित भालदेशो यस्य तम् । 'लक्ष्मी पद्मालया पद्मा कमला श्रीर्हरिप्रिया । इन्दिरा लोकमाता मा क्षीरोदतनया रमा ।' इत्यमर । एवम्भूत श्रीरामचन्द्र हे नृप! मह्य देहि । स उग्र यथा स्यात्तथा यज्ञ रक्षतु । किम्भूत श्रीरामम्—सलक्ष्मणम् ।

क्षमापाल कालोद्भटदनुजजालोच्छ्रितशिर-
श्छिदद्बाणोद्बाहुर्गुरुकथितजन्मान्तरकथ ।
अदाद्राम श्याम जलदमिव सौमित्र्यनुचर,
समाश्लिष्य प्राय· कुशिकतनयोऽथाश्रुनयन ॥ १८

क्षमापाल रामम् अदात् दत्तवान् । कि कृत्वा समाश्लिष्याऽऽलिङ्गन कृत्वा । अथ कुशिकतनयो विश्वामित्र प्राय अतिशयेन अश्रुनयन प्रेमोद्गताश्रुरासीत् । किम्भूत रामम्—श्यामम् । कमिव जलदमिव । पुन किम्भूत

रामम्—सौमित्र्यनुचरम् । किम्भूत क्षमापाल—कालोद्भटाश्च ये दनुजास्तेषा जालानि तेषाम् उच्छ्रितानि यानि शिरासि तेषा छिदन्तश्च ये बाणास्तैरुत्कृष्टो बाहुर्यस्य स । पुन किम्भूत—गुरुणा वशिष्ठेन कथिता जन्मान्तरकथा यस्य स । १

हत्वा मार्गे मार्गणेन ताडका लोकताडकाम् ।
ययौ तपोवन रामो महर्षेर्गाधिजन्मन ॥१९

राम मार्गे मार्गणेन बाणेन लोकाना जनाना ताडका मारिका ताम् एवम्भूता ताडका हत्वा निहत्य गाधेर्जन्म यस्य तस्य महर्षेर्विश्वामित्रस्य तपोवन ययौ प्राप्तवान् । १९

अथ तत्र गते रामे तत्रत्योत्सवमाह—

वैदूर्यद्युतिमिन्दुसुन्दरमुख पूर्णेन्दुतूणीयुग,
मुक्ताहारकिरीटरत्नविलसत्स्वर्णाङ्गदालङ्कृतम् ।
स्फूर्जद्बाणधनूर्धर रघुवर संवीक्ष्य सभ्रातर,
प्रेक्षन्त सिरतारका मुनिवराश्चन्द्र चकोरा इव ॥ २०

•

इति श्रीमद्रामगीतगोविन्दे महाकाव्ये
श्रीजयदेवकृतौ सानन्दरघुनन्दनो
नाम प्रथम सर्ग ॥ १

•

वैदूर्यस्य मणिविशेषस्य द्युतिरिव द्युतिर्यस्य तम् । इन्दुसुन्दरमुखम् । अक्षय-शायकत्वाज्जनाऽऽह्लादकत्वाच्च पूर्णेन्दू इव तूण्यौ पूर्णेन्दुतूण्यौ तयोर्युग युग्म यस्य

तम् । मुक्ताहारश्च किरीट च रत्नविलसत्स्वर्णाङ्गदश्च तैरलङ्कृत भूषितस्तम् । स्फूर्जती च ते बाणधनुषी ते धरतीति तम् । प्रेक्षन्त प्रकर्षेणाऽऽलोकयन्तम् । सभ्रातर भ्रातृसहितम् । एवम्भूत रघुवर श्रीराम सवीक्ष्य मुनिवरा सिरतारका बभूवु । 'षिञ्–बन्धने' रूपे दृष्टि सिन्वन्ति बध्नन्ति युञ्जन्तीति सिरा अत्र 'स्फायादेरक्' इति रक् प्रत्यय । सिरा रामे बद्धदृष्टयस्तारका येषा ते । 'तारकाक्ष्ण कनीनिका' इत्यमर । क सवीक्ष्य के इव–चन्द्र सवीक्ष्य चकोरा इव । २०

इति श्रीमद्रामगीतगोविन्दार्थविवर्णने प्रथम सर्ग । १



# द्वितीयसर्ग.

रामचन्द्र समालोक्य मुनयो वनवासिन ।
योग विस्मृत्य सहसा चक्रु स्तुतिमनेकधा ।। १

वनवासिन वनस्था मुनय रामचन्द्र समालोक्य सम्यग् दृष्ट्वा अनेकधा पृथक् पृथक् स्तुति चक्रु । कि कृत्वा—सहसा योग विस्मृत्य । अस्यायमर्थ — सहसा तत्कालमेव प्राप्त योगफलमपवर्ग विस्मृत्यानादृत्यास्तुवन्निति ।अत्र योगशब्देन योगफल गृह्यते आम्रशब्देनाम्रफल यथा । यद्वा—सहसा शीघ्र कदाऽत्र श्रीमद्राम-चन्द्राऽऽगमन भविष्यति कदा द्रक्ष्याम इत्याशयेनाहरह क्रियमाण योग विस्मृत्य । अनेनैषा सिद्धावस्थात्व सूचितम् । १

## अथ गीतं षष्ठम्

अथैतत्कृता स्तुती रामकरीरागेण रूपकतालेन प्रणमामीत्यादिना गीतेन वर्ण्यते-

प्रणमामि राममनुत्तम मनुवशकञ्जरविम् ।
कन्दर्पकोटिसमानसुन्दररूपमादिकविम् ।। १ ध्रुवपदम्

अहम् अनुत्तम सर्वोत्तम राम प्रणमामि वन्दे । अत्र प्रणमामीत्यत्रैकत्वविवक्षा-दोषोऽगम्य पूर्वश्लोकेऽनेकधेति पदोपादानात् । तदैकेनैव कृतेय स्तुतिरेव सर्वेऽपि पृथक् पृथग् स्तुवन्नित्यवगम्यम् । किम्भूत रामम्—मनुवश एव कञ्ज तस्य रविरिव भवतीति तम् । पुन किम्भूतम्—कन्दर्पाश्चाऽनेककोटय तैस्समान यत्तस्मादपि सुन्दर रूप यस्य तम् । अनेनाभूतोपमत्व सूचितम् । —पुन किम्भूतम् आदिकविम् । तस्माद्यज्ञात्सर्वहुतऋच सामानि जज्ञिरे इति श्रुते । १

## द्वितीयसर्ग

एव स्तुत्वा यदैको विरराम तदाऽन्य ऋग्भिरेवाऽस्तौदित्याह—

ब्रह्माभिधानमलेपमजमद्वैतमप्रलयम् ।
सद्रूपवन्तमबाधित चिन्मात्रमम्बुशयम् ।। २

अह ब्रह्माभिधान राम प्रणमामि । किम्भूत रामम्—अलेपम् । 'एको देवस्सर्वभूतेषु गूढ सर्वव्यापी सर्वभूतान्तरात्मा । सर्वाध्यक्ष सर्वभूताधिवास साक्षी चेता केवलो निर्गुणश्च' इति श्रुते । पुन किम्भूतम्—अजम् । 'नात्मा जजान न मरिष्यति' इति श्रुते । पुन किम्भूतम्—अद्वैतम् । सत्य ज्ञानमनन्त ब्रह्म नेह नानाऽस्ति किञ्चन इति श्रुते । पुन किम्भूतम्—अप्रलयम् । 'न मृत्यो स मृत्युमाप्नोति' इति श्रुते । अत एव पुन किम्भूतम्—सद्रूपवन्तम् । त्रिष्वपि कालेष्वव्यभिचारेण वर्तमानम् । पुन किम्भूतम्—अबाधितम् । 'नैन छिन्दन्ति शस्त्राणि नैन दहति पावक । न चैन क्लेदयन्त्यापो न शोपयति मारुत '। इति स्मृते । पुन किम्भूतम्–चिन्मात्र चित्स्वरूपम् । पुन किम्भूतम्— अम्बुशयम् । 'आपो नारा इति प्रोक्ता आपो वै नरसूनव । अयन तस्य ता पूर्व तेन नारायणस्स्मृत '। इति स्मृते । २

अथान्य स्तौति—

सत्यस्वरूपममेयमक्षरमप्रपञ्चगतम् ।
अव्यक्तमप्रतिम निरीहमखण्डमीशगतम् ।। ३

सत्यस्वरूप राम प्रणमामि । सच्च त्यच्च सत्यम् । सच्छब्देन पृथिव्यप्तेजासि त्यच्छब्देन वाय्वाकाशौ एव च सत्य भूतपञ्चकम् 'तत्सत्यमित्याचक्षते इति श्रुते '। सत्यस्य स्वरूप यस्मादिति तम् । किम्भूत रामम्—अमेयम् अपरिमितम् । 'ततो विराडजायत विराजोऽधिपूरुष । स जातोऽत्यरिच्यत पश्चाद्भूमिमथो पुर ' इति श्रुते । पुन किम्भूतम्—अक्षरमव्ययम् । पुन किम्भूतम्—अप्रपञ्चगतम् प्रपञ्चाद्बहिर्भूतम् । पुन किम्भूतम्—अव्यक्तम् बहिर्दृग्भिरविज्ञातम् । पुन किम्भूतम्—अप्रतिमम् असदृशम् । पुन किम्भूतम–निरीह

निश्चेष्टम् । पुन किम्भूतम्—अखण्डम् पूर्णतमम् । पुन किम्भूतम्—ईशैरन्तर्दृग्भिर्गत ज्ञातस्तम् । 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षु स शृणोत्यकर्ण । नस वेत्ति वेद्य न च तस्याऽस्ति वेत्ता तमाहुरग्र्य पुरुष महान्तम् ।' इति श्रुते । ३

अथान्य स्तौति—

स्मृतिवेदहरशङ्खाऽसुरप्रतिघातदक्षतरम् ।
क्षीरोदमथनमहागमन्दरपृष्ठभागधरम् ।। ४

स्मृतिवेदहरश्चासौ शङ्खाऽसुरस्तस्य प्रतिघाते मारणे दक्षतर प्रवीणतरस्त राम प्रणमामि । किम्भूत रामम्—क्षीरोदमथने महागश्चासौ मन्दरस्त पृष्ठभागेन धरतीति तम् । अनेन मत्स्यकमठावतारौ सूचितौ । ४

अथान्यो धृतवाराहरूप राममित्थ स्तौति—

उत्तुङ्गरदशिखरेण चायतभूमितूलकरम् ।
प्रह्लादपालकमसुरकालकमभ्रभेदधरम् ।। ५

उत्तुङ्गमत्युन्नत च तत् रदशिखर तेनायताऽतिविस्तारा चासौ भूमिस्तस्यास्तूलकर जलाद्बहिर्नि सारणकारकस्तम् । 'कूटोऽस्त्री शिखर शृङ्गम्' इत्यमर । अथान्यो नृसिंहरूपिण राम स्तौति—प्रह्लादपालक राम प्रणमामि । किम्भूतम् रामम्—असुर हिरण्यकशिपु कालयतीति तम् । पुन किम्भूतम्—अभ्राणा भेदो यैस्ते अभ्रभेदा सटास्तान् धरतीति । भागवते यथा—'सटाऽवधूता जलदा परापतन्' इति । यद्वा—अभ्राणा भेदो येनैवविधमद्भुतवामनरूप धरतीति । अनेन वामनाऽवतार सूचित । ५

कोदण्डबाणकुठारकरतलमखिलबाहुजहम् ।
साकेतभूपतिनन्दन सत्यादिबाहुवहम् ।। ६

कोदण्डश्च बाणश्च कुठारश्च ते करतले यस्यैवविध राम प्रणमामि । किम्भूत रामम्—अखिलाश्च ये बाहुजा क्षत्रियास्तान्हन्तीति तम् । अथ

कश्चिन्मुनिरिति स्तौति—साकेतभूपतिनन्दन राम प्रणमामि। किम्भूत रामम्—'सत्य च समदर्शनम्' इति भगवद्वाक्यस्मरणात् सत्य समदर्शनम् आदि मुख्य यस्मिन्निति सत्यादि कल्पद्रुमस्तद्वच्च यौ बाहू सत्यादिबाहू वहति दधातीति तम्। अनेनाऽतिवदान्यत्व सूचितम्। यद्वा— 'तप शोच दया सत्यमिति पादा प्रकीर्तिता'। 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मान सृजाम्यहम्'। इत्यादिस्मरणात् सत्यम् आदि मुख्य येषु ते सत्यादय धर्मपादास्तान् बाहुना वहति पुन पुनर्यथातथ्यता नयतीति तम्। यद्वा—वनप्रयाण-सीताहरणत्यागात्मत्यागादिविपत्सु तथा रामेण सहानेकविधराज्याधिभोगादि-सम्पत्सु सत्य समदर्शनम् आदि मुख्य यस्मिन्निति सत्यादिर्लक्ष्मण बाहुवद्वहति सहायता नयतीति बाहुवह सत्यादिर्बाहुवहो तस्य तम्। अनेनैकाकी एष श्रीमद्रामचन्द्रोऽस्मद्यज्ञादिकार्यसाधने प्रभुर्यदि सलक्ष्मणस्तर्हि किमुत। ६

जलदाभमिन्दुनिभानन किञ्जल्कपीतपटम्।
मणिचित्रहेमकिरीटभूषितचारुभालतटम् ॥ ७

पुन किम्भूत रामम्—जलदाभ मेघश्यामम्। पुन किम्भूतम्—इन्दुनिभानन चन्द्रप्रतिमवक्त्रम्। पुन किम्भूतम्—किञ्जल्कवत्पीतो पटौ यस्य तम्। 'किञ्जल्क केसरोऽस्त्रियाम्' इत्यमर। 'वस्त्रमाच्छादान वासश्चैल वसनमशुकम्। सुचेलक पटोऽस्त्री स्यात्—'इति चाऽमर। पुन किम्भूतम्—मणिचित्र च तत् हेमकिरीट तेन भूषित चारुभालतट भालप्रदेशो यस्य तम्। ७

इति पठति यो रघुवीरवर्णनमुज्ज्वल सुचिरम्।
जयदेवनिर्मितमित्यनूपममेति मोदभरम् ॥ ८

जयदेवनिर्मितमितीद गीत य पठति स सुचिरमनन्त मोदभरमानन्दकदम्बम् एति। किम्भूत गीतम्—उज्ज्वल निरपवादम्। निरपवादत्वे हेतु। पुन किम्भूत—'लघि—गतौ' इति धात्वर्थातिशयात्। 'सक्रन्दनो निमिषऽएकवीर'

इति श्रुतेश्च । रघु सर्वातिगश्चासौ वीर रघुवीर श्रीरामचन्द्रस्तस्य वर्णन यस्मिन् तत् । अत पुन किम्भूतम्—अन् पमम् अनुपमेयम् । किम्भूत मोदभरम् अनूपमम् । ८

इति गीत षष्ठम् ।

अथो वितायमाने यज्ञे मारीचादिनिपातो वर्ण्यते प्राप्येति त्रिभि —

प्राप्य नैशाचरी सेना श्येनालिचलदशुका ।
मारीचप्रमुखा भीमा ववृषू रुधिर भृशम् ।। २

भीमा भयङ्करा मारीचप्रमुखा राक्षसा भृश यथा स्यात्तथा रुधिर ववृषु । कि कृत्वा–निशाचराणामिय नैशाचरी ता सेना प्राप्य लब्ध्वा । अनेन बहुशो रक्ष पृतनापतिभि सहैते रावणेन प्रेषिता इति सूचितम् । किम्भूता मारीचप्रमुखा—श्येनालिभि श्येनपक्षिभि चलन्त्यशुकानि येषा ते । 'अलि स्याद् भ्रमरे पक्तौ स्यादालिश्च सखीजने' इति विश्व । २

मारीच मारयामास वायव्यास्त्रेण राघव ।
अत्यन्तव्याकुलो भूत्वा ययौ सागरसन्निधिम् ।। ३

राघव श्रीरामचन्द्र वायव्यास्त्रेण मारीच मारयामास । स मारीच अत्यन्तव्याकुलो भूत्वा सागरसन्निधिं ययौ सागरतटे पपातेत्यर्थ । ३

ददाह पावकास्त्रेण सुबाहु नाम राक्षसम् ।
शेषास्तमीचरास्तत्र लक्ष्मणेन निपातिता ।। ४

चेति शेष । च पुन सुबाहु नाम राक्षस पावकास्त्रेण अग्निबाणेन ददाह भस्मीचकार । तत्र तस्मिन्नेव क्षणे शेषास्तमीचरा लक्ष्मणेन निपातिता समरशयने शायिता इत्यर्थ । ४

अथान्यामपि भगवल्लीला वर्णयिष्यन्मिथिलामुनियान वर्णयति प्रतिचचालेति द्वाभ्याम्—

प्रति चचाल पुरी मिथिलामथो दशरथप्रभवानुगतो मुनि ।
गिरिशकार्मुकभङ्गमहेक्षण क्षितिभृता जनकेन निमन्त्रित ॥ ५

मुनि विश्वामित्र मिथिला प्रति चचाल प्रतस्थे। किम्भूतो मुनि —दशरथात्प्रभवो ययोस्तौ अनुगामिनौ यस्य स । पुन किम्भूत —क्षितिभृता क्षितिपेन जनकेन निमन्त्रित निमन्त्रण दत्त्वाऽऽहूत । कि कृत्वा—गिरिशकार्मुकभङ्गस्य मह उत्सव तस्य यत् ईक्षण गिरिशकार्मुकभङ्गमहेक्षणम् उद्दिश्येति शेष ।'मह उद्धव उत्सव' इत्यमर । ५

गौतमी तारयित्वादौ नमस्कृत्य च जाह्नवीम् ।
ददर्श मिथिला पुण्या जनकेनाऽभिपालिताम् ।। ६

मुनि गौतमीम् अहल्याम् आदौ तारयित्वा रामेण तच्छापविमोचन कारयित्वा । च पुन जह्नोरिय कन्या जाह्नवी ता नमस्कृत्य प्रणम्य जनकेन राज्ञाऽभिपालितामभिरक्षिता पुण्या पुण्यकारिणी मिथिला पुरी ददर्श दृष्टवान् । ६

## अथ गीतं सप्तमम्

रामोऽथ लक्ष्मण प्रत्याह। तदेवाऽऽशावरीरागेण रूपकतालेन जयतीत्यादिना गीतेनाभिवर्ण्यते—

जयति विदेहनगरमनुरूपम् ।
दिशि दिशि राजमानचामीकर-
रचितविविधमणियूपम् ॥१ ध्रुवपदम्

हे लक्ष्मण! विदेहनगरम् अनुरूप यथा स्यात्तथा जयति सर्वोत्कर्षेणाभिवर्तते ।

किम्भूत विदेहनगरम्—दिशि दिशि राजमानाश्चामीकररचिता विविधमणियूपा नानामणिजटितयज्ञस्तम्भा यस्मिस्तत् । १

रुचिरलतातरुसुमनवाटिकावापीकूपतडागम् ।
वप्रवलयपरिखावृतमभिनवचित्रमुदयदनुरागम् ।। २

पुन किम्भूत विदेहनगरम्—रुचिरा मनोहरा लतातरुसुमनवाटिका वापीकूपतडागा यस्मिस्तत् । वाटिका —लताश्च तरवश्च सुमनसश्चेति विग्रहे 'टाडका' इति डप्रत्यये कृते लतातरुसुमना इति साधु । लतातरुसुमनाना वाटिका लतातरुसुमनवाटिका । 'वल्ली तु व्रततिर्लता' इत्यमर'। 'वृक्षो महीरुह शाखी विटपी पादपस्तरु' इति चाऽमर । 'स्त्रिय सुमनस पुष्प प्रसून कुसुम सुमम्' इत्यमर । सुमनस्शब्द स्त्रीलिग 'सुमना मालती जाति' इत्यमर । 'पद्माकरस्तडागोऽस्त्री कासार सरसी सर' इत्यमर । पुन किम्भूत विदेहनगरम् वप्र प्राकार स एव वलय वप्रवलयम् परित खाता परिखा वप्रवलय च परिखा च ताभ्याम् आवृतमावेष्टित तत् । पुन किम्भूतम्—अभिनव नूतन चित्र रचनाविशेषो यस्मिस्तत् । पुन किम्भूतम्—उदयन्प्रकाशमान अनुराग सुधादिरागो यस्मिस्तत् । यद्वा—'अय—गतौ' इति धात्वर्थातिशयात् उदयते इत्युदयन्त धनुर्यज्ञनिरीक्षणायोत्कण्ठतया गच्छन्त अनुरागा देवा यस्मिस्तत् । अनु पश्चात् रागो येषा तेऽनुरागा । २

शेषभयङ्करवेशनृपतिदुर्धर्षमहेशपिनाकम् ।
मणिमयसौधसमूहमुदग्रमरुच्चलविशदपताकम् ।। ३

पुन किम्भूतम्—शेषस्येव भयङ्कर वेशो यस्य तत् शेषभयङ्करवेश तदेव नृपतिदुर्धर्षं नृपाधृष्य महेशपिनाक शिवधनुर्यस्मिस्तत् । पुन किम्भूतम्—मणिमया मणिनिर्मिताश्च ये सौधास्तेषा समूहो यस्मिस्तत् । 'सौधोऽस्त्री राजसदनम्' इत्यमर । पुन किम्भूतम्—उदग्रा उन्नता मरुच्चला पवनचञ्चला विशदा उज्ज्वला प्रकाशमाना पताका यस्मिस्तत् । ३

तोरणनिकरकिरणसञ्चारविनिन्दितसुरपतिचापम् ।
आहुतिगन्धसहितमखधूमविधूतसकलजनपापम् ।। ४

पुन किम्भूतम्—तोरणनिकरकिरणसञ्चारेण विनिन्दित मन्दीकृत सुरपतिचापो यस्मिस्तत् । पुन किम्भूतम्—आहुतिगन्धसहितश्चासौ मखधूमस्तेन विधूत दूरीकृत सकलजनपाप यस्मिस्तत् । ४

गजरथतुरगपदातिविघट्टविशृङ्खलशब्दमुदारम् ।
शारदविधुसकाशविकाशकनककलशाश्रितताारम् ।। ५

पुन किम्भूतम्—गजाश्च रथाश्च तुरगाश्च पदातयश्च ते तेषा विघट्ट सङ्घट्ट गजरथतुरपदातिविघट्ट तस्य यो विशृङ्खलशब्द कोलाहलो यस्मिस्तत् । पुन किम्भूतम्—उदारम् अतिविशालम् । पुन किम्भूतम्—शारदविधुसकाश शरच्चन्द्रसदृश विकाशो येषा ते च ये कनककलशास्तेषु आश्रिता स्थापितास्तारा शुद्धमौक्तिकमणयो यस्मिस्तत् । 'निभसकाशनीकाशप्रतीकाशोपमादय'-इत्यमर । 'तारो मुक्तादिसशुद्धौ तारणे शुद्धमौक्तिके' इति विश्व । ५

पण्डितसुमतिसुशीलसुधर्मसुकर्ममनुजपरिवारम् ।
पतिपदपद्मनिहितनिजचित्तचतुरसुन्दरपुरदारम् ।। ६

पुन किम्भूतम्—पण्डिता सुमतय सुशीला सुधर्माण सुकर्माणश्च ये मनुजास्तेषा परिवार समूहो यस्मिस्तत् । पुन किम्भूतम्—पतिपदपद्मनिहितनिजचित्ताश्चतुरा सुन्दरा पुरदारा पौरस्त्रियो यस्मिस्तत् । 'चित्त तु चेतो हृदय स्वान्त हृन्मानस मन' इत्यमर । ६

सुखदवितानमनेकतपोधनभूषितमतिशयलोभम् ।
पङ्कजयोनिविनिर्मितमिव कृतसन्तनतमानसलोभम् ।। ७

पुन किम्भूतम्—सुखदानि वितानानि यस्मिस्तत् । पुन किम्भूतम्—अनेका नानाविधाश्च ये तपोधनास्तैर्भूषितम् । पुन किम्भूतम्—अतिशयेन सर्वाधिक्येन

लोभयतीत्यतिशयलोभम् । पुन किम्भूत विदेहनगरम्–कृत प्रारब्धसम्पादित स वस्तुवृन्द यस्मिस्तत् । अनेन येषा महान् प्रारब्धसञ्चयोऽस्ति त एवात्र सञ्जायन्ते निवसन्ति च तेषामेवैषाऽक्षिगोचरा भवतीति सूचितम् । यद्वा–कृतयुगस्य स तारुण्य यस्मिस्तत् । 'वृषे च स सदानन्दे सा स्त्रिया स वन धनम् । यौवनेऽपि समाख्यात वस्तुवृन्दे समाहृतम्' । इति नाममालिकायाम् । एव चास्य धर्मार्थकामास्पदत्व दर्शयित्वाऽथ मोक्षास्पदत्व दर्शयति–पुन किम्भूतम्–'विद्या समस्तास्तव देवि भेदा स्त्रिय समस्ता सकला जगत्सु—' 'या देवी सर्वभूतेषु लक्ष्मीरूपेण सस्थिता' 'या देवी सर्वभूतेषु जातिरूपेण सस्थिता' 'या देवी सर्वभूतेषु विष्णुमायेति शब्दिता' इत्यादिवाक्यस्मरणात् । स्त्रीधनजातिरूपेण तता विस्तीर्णा चासौ मा ततमा लोभेन सह वर्तमाना सलोभा न सलोभा नसलोभा ततमाया नसलोभा यस्मिस्तत् । यद्वा–'मन-ज्ञाने' इति धात्वर्थातिशयात् मन्यते ज्ञायतेऽनेनेति मानम्–'एको देव सर्वभूतेषु गूढ सर्वव्यापी सर्वभूतान्तरात्मा । सर्वाध्यक्ष सर्वभूताधिवास –।' इत्यादिश्रुते । ततस्याऽनन्तविस्तरस्य परब्रह्मण मान ज्ञान ततमान तस्मिन्सलोभा जना यस्मिस्तत् । यद्वा–'मान–पूजने' इति धात्वर्थातिशयात् ततस्य मान पूजन तस्मिन्सलोभा यस्मिस्तत् । एवमनेकधाऽस्य मोक्षास्पदत्व सूचितम् । किमिव–पङ्कजस्य योनिरुत्पत्तिस्थान पङ्कजयोनि श्रीविष्णु तेन यद्विनिर्मित तदिव वैकुण्ठमिव । अनेन यन्मया स्वेनैव निर्मित तदिह केनाऽनीतमित्याश्चर्यमिति सूचितम् । वैकुण्ठस्य स्वहस्तनिर्मितत्व भागवते–'पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठै सुरसत्तमैं । तयो स्वकलया जज्ञे वैकुण्ठो भगवान्स्वयम् । वैकुण्ठो निर्मितो येन लोको लोकनमस्कृत ' । ७

**श्रीजयदेवकवेरुदित मिथिलापुरगीतमशोकम् ।**
**मङ्गलमोदभरेण करोतु सदा मुदित जनलोकम् ।। ८**

श्रीजयदेवकवे उदितमुद्भूत मिथिलापुरगीत मङ्गलेन सहितो यो मोद आनन्द तस्य यो भर समूहस्तेन जनलोक मुदितम् आनन्दित करोतु । किम्भूत गीतम्—अशोक शोकनाशनम् । ८

जनकोऽथ विश्वामित्र पृच्छति—

अर्भकद्वयमवेक्ष्य मैथिल सिंहसहननमात्तकार्मुकम् ।
गाधिनन्दनमुवाच सादर कस्य नाथ ! तनयौ सुलक्षणौ ।। ७

इदमिति शेष । मैथिल जनक सादर यथा स्यात्तथा गाधिनन्दन विश्वामित्रम् इदमुवाच । किमिदम्—हे नाथ ! सुलक्षणौ इमौ तनयौ कस्या स्त । कि कृत्वा—अर्भकद्वयम् अवेक्ष्य । अथाऽर्भकत्वेप्यद्भुतत्व दर्शयति—किम्भूतमर्भकद्वयम्—सिहसहनन वराङ्गरूपम् । 'वराङ्गरूपोपेतो य सिंहसहननो हि स' इत्यमर । यद्वा—सिहस्येव सहनन शरीर यस्य तत् । 'गात्र वपु सहनन शरीर वर्ष्म विग्रह' इत्यमर । पुन किम्भूतम्—आत्तकार्मुक गृहीतचापम् । ७

एव पृष्टोऽथ विश्वामित्रो जनक प्रति वदति—

अयोध्याधिपतिर्वीरो राजा दशरथाभिध ।
तस्यैतौ तनयौ भूप ! प्रसिद्धौ रामलक्ष्मणौ ।। ८

हे भूप ! एतौ तस्य तनयौ स्त । किम्भूतौ एतौ—रामलक्ष्मणौ इति प्रसिद्धौ प्रख्यातौ इतीति शेष । तस्य—य अयोध्याधिपति राजास्ति । किम्भूतोऽयोध्याधिपति—दशरथाभिध । पुन किम्भूत—वीर सायुगीन । 'शूरो वीरश्च विक्रान्तो जेता जिष्णुश्च जित्वर । सायुगीनो रणे साधु शस्त्राजीवादयस्त्रिषु' इत्यमर । ८

एवमुक्त्वाऽथ स्वाभिप्रायमाविष्करोति—

कुत्र माहेश्वर चाप सर्वराजमदापहम् ।
दर्शयाशु महाराज ! राघवाय महात्मने ।। ९

हे महाराज ! सर्वराजमदापहो माहेश्वरश्चाप कुत्राऽस्ति त चाप राघवाय सर्वातिवर्तिने श्रीरामचन्द्राय आशु शीघ्र दर्शयाऽऽलोकय । किम्भूताय

राघवाय—महात्मने महान्ति आत्मानि आत्मवाचकानि धृतिबुद्धियत्नस्वभावात्मगात्राणि यस्य स महात्मा तस्मै । 'आत्मा यत्नो धृतिर्बुद्धि स्वभावो ब्रह्म वर्ष्म च' इत्यमर । ६

ततो दर्शिते धनुष्यन्यामपि तल्लीला वर्णयति—आदायेति द्वाभ्याम्—

आदाय दक्षिणे पाणौ महावीरो रघूत्तम ।
खण्डयामास कोदण्डमिक्षुदण्डमिव द्विप ॥ १०

महावीरोऽतिसायुगीनो रघूत्तम्र श्रीरामचन्द्र दक्षिणे पाणौ कोदण्ड धनुरादाय खण्डयामास । क कमिव—द्विप हस्ती इक्षुदण्डमिव । इक्षुर्महारसो वेणुर्मिश्रितो गुरुपत्रक ' इति निघण्टु । १०

रघुवरभुजदण्डखण्डितस्य त्रिपुररिपोर्धनुष प्रचण्डघोष ।
प्रमरति धरणीनभोऽन्तराले मुखरितदिग्विजयो जयोदयोऽसौ ॥११

त्रिपुररिपो शिवस्य धनुष प्रचण्डघोष उत्कटशब्द धरणीनभोऽन्तराले पृथिव्याकाशयोर्मध्ये प्रसरति स्म । अत्र स्मेति शेष । किम्भूतस्य धनुष— रघुवरभुजदण्डखण्डितस्य । किम्भूत प्रचण्डघोष —मुखरित दिशि दिशि प्रकटीकृत दिग्विजयो येन स । ११

## अथ गीतमष्टमम्

अथैतद्धनुर्भङ्गघोषश्रवणादागते परशुरामे रामलीलामपि वर्णयन्परशुराम निरूपयति परशुराममित्यादिना गीतेन । गीतस्यास्याऽऽशावरीरागो रूपकताल —

परशुराममवलोक्य सकोपम् ।
रघुपतिरभिजहर्ष युगबाहु-
विहितबहुबाहुजलोपम् ॥ १ ध्रुवपदम्

रघुपति सकोप परशुरामम् अवलोक्य अभिजहर्ष आनन्दितवान् । किम्भूत

परशुरामम्—बाहुभ्या जाता बाहुजा तेषा लोप बाहुजलोप युगमितौ च तौ बाहू ताभ्या विहित बहुवार बाहुजलोपो येन तम् । १

भृकुटीकुटिलमरुणवदन रदखण्डितरदपरिधानम् ।
दधतमिव द्युमणि शशिन सकुज ससित कृतमानम् ।। २

पुन किम्भूत परशुरामम्—भृकुटचौ कुटिले यस्य तम् । पुन किम्भूतम्—अरुणवदनम् । पुन किम्भूतम्—रदाभ्या दन्ताभ्या खण्डित दष्ट रदपरिधानम् ओष्ठौ येन तम् । 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमर । किम्भूतमिव—द्युमणि दधतमिव । किम्भूत द्युमणिम्—सकुज सभौमम् । अनेन रदखण्डितैकाधरार्द्धभागो द्युमणिरिवादृश्यतैको भौम इवादृश्यत इति सूचितम् । 'द्युमणिस्तरणिर्मित्र ' इत्यमर 'अङ्गारक कुजो भौम ' इत्यमर ।पुन किम्भूतमिव—ससित सशुक्र शशिन चन्द्रमस दधतमिव । अनेनैको रद शशीवादृश्यतैक शुक्र इवादृश्यत इति सूचितम् । पुन किम्भूत परशुरामम्—कृत मानो येन तम् । 'गर्वोऽभिमानोऽहङ्कारो मानश्चित्तसमुन्नति ' इत्यमर । २

रुचिरजटामुकुटद्युतिपुञ्जविभासिमनोहरभालम् ।
पाणिसरोजनिहितशरचापकुठारमतीव करालम् ।। ३

पुन किम्भूतम्—रुचिरा मनोहरा या जटास्ता एव मुकुट तस्य यो द्युतिपुञ्जस्तेन विभासी विशेषत शोभमानो मनोहर भाल कपालो यस्य तम् । 'शिखा चूडा केशपाशी व्रतिनस्तु सटा जटा' इत्यमर । पुन किम्भूतम्—शरेण-सहितश्चासौ चाप शरचाप शरचापश्च कुठारश्च शरचापकुठारौ पाणी एव सरोजे पाणिसरोजे तयोर्निहितौ न्यस्तौ शरचापकुठारौ येन तम् । 'पञ्चशाख शय पाणि ' इत्यमर 'कलम्बमार्गणशरा ' इत्यमर 'धनुश्चापौ' इत्यमर 'द्वयो कुठार स्वधिति परशुश्च परश्वध ' इत्यमर । पुन किम्भूतम्—अतीवकरालम् अत्यन्तभीषणम् । यद्वा—वयोविद्यातपस्तेज पराक्रमै अतीवकरालम् अतिसमुन्न-

तम् । 'करालो दन्तुरे तुङ्गे भीषणे चाभिधेयवत् । दन्तुरस्तून्नतरदे तथोन्नतनते त्रिषु' इति भानुजीदीक्षित । ३

एककविंशतिवारमहाविजयस्फुटश गजलेखम् ।
भूतिविभूषितविग्रहभागमनूपमरूपमशेषम् ॥ ४

पुन किम्भूतम्—'स्फुट–विकशने' विशेषेण जीयन्ते शत्रवोऽस्मिन्निति विजय सग्राम महाश्चासौ विजय महाविजय महाविजये स्फुटन्त इति महाविजयस्फुटा क्षत्रिया एककविशतिवार महाविजयस्फुटान् श्यति तनूकरोतीति एकक-विशतिवारमहाविजयस्फुटशस्तम् । यद्वा—एककविशतिवार महाविजये स्फुट श कल्याण यस्य तम् । 'श्व श्रेयस शिव भद्रम्' इत्यमर । पुन किम्भूतम्–गजाख्या लेखा यस्य तम् । गजलेखाफल यथा—'पुसो यस्य करे चास्ति गजाख्या रेखिका शुभा स पुमानेकवीर स्याद्धनी मानी भुव पति' एतदेव विशिनष्टि । पुन किम्भूतम् — भूतिभिरणिमादिभिर्विभूपिता विग्रहभागा समस्ताङ्ग–प्रदेशा यस्य तम् । 'अणिमा महिमा चैव गरिमा लघिमा तथा । प्राप्ति प्राका-म्यमीशित्व वशित्व चाष्टभूतय' इत्यमर । यद्वा—भूत्या भस्मना विभूषिता विग्रहभागा यस्य तम् 'गात्र वपु सहनन शरीर वर्ष्म विग्रह' इत्यमर । पुन किम्भूतम्—अनु पश्चादुपमा यस्य तदनूपमम् अनूपमम् अनूपमेय रूप यस्य तम् । पुन किम्भूतम्—न कश्चित् शिष्यतेऽनेनेत्यशेष एकादशो रुद्र अशेष इव भवतीत्यशेषस्तम् । अनेन क्षत्रियाणा महाकाल इवाऽदृश्यत इति सूचितम् । ४

ललितसुमेरुवलयपरिवीतमुमापतिशिष्यमुदारम् ।
चन्द्रविशदमखतन्तुसमेतमलिप्रभनिश्चलतारम् ॥ ५

पुन किम्भूतम्—ललित सुमेरुर्येषु तानि च वलयानि ललितसुमेरुवलयानि तानि परिवीतानि परिधृतानि येन तम् । पुन किम्भूतम्–उमापतिशिष्य तदेव विशिनष्टि । पुन किम्भूतम्—उदारम् अतिवदान्यम् । 'उदारो दातृमहतो'

इत्यमर । पुन किम्भूतम्—चन्द्रविशदश्चासौ मखतन्तुर्यज्ञोपवीत तेन समेत सम्पन्नस्तम् । पुन किम्भूतम्—अलिप्रभे भ्रमराभे निश्चले तारे अक्षिकनीनिके यस्य तम् । ५

अस्त्रशस्त्रसम्भूतमहाव्रणवक्षसमाहवधीरम् ।
कटितटयुगलनिषङ्गधर जलवाहकशब्दगभीरम् ।। ६

पुन किम्भूतम्—अस्त्रशस्त्रसम्भूता महाव्रणा वक्षसि यस्य तम् । 'अस्त्र मन्त्राभिषिक्त स्याच्छस्त्र साधारण स्मृतम्' इति हलायुध । पुन किम्भूतम्—आहवे समरे धीर पण्डितस्तम् । 'अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवा' इत्यमर । 'धीरो मनीषी ज्ञ प्राज्ञ सङ्ख्यावान्पण्डित कवि' इत्यमर । पुन किम्भूतम्—कटितटे युगलनिषङ्गे धरतीति तम् । 'युग्म तु युगल युगम्' इत्यमर । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयौ' इत्यमर । पुन किम्भूतम्—जलवाहको मेघ तस्येव य शब्द स गभीरो यस्मिस्तम् । ६

'शिवशिवशिव' शिवमन्त्रममु जपमानमरिक्षयहेतुम् ।
दर्भपटीमृगचर्मयुत भृगुवशमनुत्तमकेतुम् ।। ७

पुन किम्भूतम्—'शिवशिवशिव'—अमु शिवमन्त्र जपमानम् । किम्भूत शिवमन्त्रम्-अरिक्षयस्य रिपुविनाशस्य हेतु कारण तम् । यद्वा—अरीणाम् अहमादिशत्रूणा क्षयो यस्मिन्नित्यरिक्षयो मोक्षस्तस्य हेतुस्तम् । पुन किम्भूत परशुरामम्—दर्भै र्निर्मिता चासौ पटी दर्भपटी कुशानिर्मितवस्त्रविशेष तच्च मृगचर्म च ताभ्या युतस्तम् । पुन किम्भूतम्—भृगुवशस्य समुन्नतकेतुरिव भूवतीति तम् । 'ग्रहभेदे ध्वजे केतु' इत्यमर । ७

श्रीजयदेवकवेरुदित द्विजराजमहाभटरूपम् ।
पूरयतु प्रणतस्य जनस्य मनोरथमामनुरूपम् ।। ८

श्रीजयदेवकवे उदित कोऽर्थ श्रीजयदेवस्येय गीतात्मिका वाणी 'णम—प्रह्वत्वे शब्दे च' इति धात्वर्थात् प्रणतस्यैतद्गानादिशब्दकरणे प्रवृत्तस्य

जनस्य मनोरथ पूरयतु । 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती। व्याहार उक्तिर्लपित भाषित वचन वच' इत्यमर । उदितमिति भाषितस्यैव पर्याय इति ज्ञेयम् । किम्भूतमुदितम्– प्रशस्तो महाभटो महाभटरूप द्विजराज श्रीपरशुराम महाभटरूपो यस्मिस्तत् । अत्र 'प्रशसाया रूप' इति रूपप्रत्यय । पुन किम्भूतम्—प्रशस्तश्चासौ मनु मनुरूप आ समन्तात् मनुरूप इत्यामनुरूपम्। अनेनाऽत्र कालाहिना दष्टस्यैतदेव महामन्त्रश्चैतदेव । महौषधमिति सूचितम् । 'मनू राजविशेषे स्यादोषधीषु मनु स्मृत जपादौ च मनु प्रोक्तो मन्त्रे भैषज्य-कर्मणि' इति हलायुध । ८

इति गीतमष्टमम् ।

एव तावत्परशुरामरूप निरूप्याथ तद्वाक्य निरूपयति नाट्यारमिति–

नाट्यार प्रकरोतु कार्मुकलता विन्यस्तु हस्ताम्बुज,
किञ्चित्पाटलभासिलोचनयुगे तावन्निमेषोदयान् ।
यावच्छायककोटिपाटितरिपुक्ष्मापालमौलिस्खलन्,
मल्लीमाल्यपतत्परागपटलैर्नाऽऽमोदिता मेदिनी ।। १२

मे कार्मुकलता तावत् पाटलभासिलोचनयुगे किञ्चित्सूक्ष्म नाट्यार प्रकरोतु नाट्ये ऋच्छतीति नाट्यारस्त नाट्यार नाट्यकलाकौतुकविशेष-मनुभवतु । पाटला चासौ भा पाटलभा सा विद्यते यस्य तत्पाटलभासि लोचन-युग यस्य स पाटलभासिलोचनयुग शिव तस्मिन् पाटलभासिलोचनयुगे शिवे कोऽर्थ शिव निमित्तीकृत्य अत्र 'निमित्तात्कर्मयोगे सप्तमी वक्तव्या' इति द्वितीयाऽर्थे सप्तमी ज्ञातव्या । 'सीम्नि पुष्कलको हत' इत्यत्रवत् । शिवचापभञ्जनात् शिव-निमित्तमेव युद्धम् । शिवरूप श्वेतनेत्रमेक श्वेत चन्द्रमयत्वात । नेत्रद्वय पाटल सूर्याग्निमयत्वात् 'श्वेतरक्तस्तु पाटल' इत्यमर 'युग्म तु युगल युगम्' इत्यमर । यद्वा– मे लोचनयुगे नेत्रयुगसमीपे लतेव भवतीति लता कार्मुकयेव लता नर्तकी कार्मुकलता नाट्यार नाट्यगतिविशेष करोतु कुर्यात् । किम्भूते लोचनयुगे—

पाटला भा यस्य तस्मिन् । अनेन राजानौ राजभटास्तावद्वैरिविनाशदिदृक्षवो भवन्ति वैरिविनाशे च सति तदनु स्वस्य पुरो नृत्यमाना नर्तकी पश्यन्तोऽतिमुदमाप्नुवन्ति । अह तु वैरिविनाश कार्मुकलतानर्तकीनर्तन च सहैवालोकयन्ननुत्तमतमा मुदमाप्नोमीति सूचितम् । मे हस्ताम्बुज नितरामतिशयेन मेषे मेषराशौ उदयम् उच्चत्वप्राप्तिर्येषा ते निमेषोदया सूर्यास्तान् विन्यस्तु आवृणोतु बाणैरिति शेष । बहुवचन त्वत्र रवेर्द्वादशरूपत्वाभिप्रायेण। अनेनैते रामादय एतद्व शीयास्ततस्तद्विनाशमसहिष्णुरेवाय मत्कार्मुकलता शोषयिष्यन्नुदितवान् । किञ्च नाट्यगतिर्वितानादृते सम्भवति । तत एन तावदेव स्वविशेषवितानेनाच्छादयामीति सूचितम् । ननु कियत्कालावधीति चेत्तत्राह—यावत् शायकाना या कोटय ताभि पाटिता विदीर्णाश्च ये रिपुक्ष्मापालास्तेषा ये मौलयस्तेभ्य स्खलन्ति यानि मल्लीमाल्यानि तेभ्य पतन्ति यानि परागपटलानि तै मेदिनी पृथिवी नामोदिता न सौगन्ध्यवती स्यात् । 'समूहे पटल न ना' इत्यमर । अत्र विशेषणीभूताम्बुजशब्देन लताशब्देन किञ्चिच्छब्देन च कृतपूर्वयुद्धायेच्छया मन सम्भावितैतद्युद्धस्य लाघव सूचितम् । १२

श्रुत्वा रामदेव —

रमन्ते युद्धाजिरे क्रीडन्तीति रामा मारीचविराधेन्द्रजिद्रावणादयस्तान्दीव्यति बिजिगीषतीति रामदेव श्रीरामचन्द्र श्रुत्वा महाशौर्योपबृहितैतत्परशुरामवाक्यमाकर्ण्य उवाचेति शेष । अनेनातिकठीयसीरपि परशुरामवाचो निशम्य न तद्विजिगीषुरासीत्किन्तु तमनुनेतुमेवैच्छदिति सूचितम् ।

तदेवाह भृगुतिलकेति—

भृगुतिलक!नमस्ते योगिनामग्रगण्य !,  
त्रिपुहरसुशिष्य ! श्रीपते षष्ठमूर्ते !।  
वितर मयि सुदृष्टि प्रेमपूर्णा महर्षे !,  
जहिहि प्रवलरोष दोषभूत सदैव ।। १३

हे रामचन्द्र ! हे कमलाविहार ! जय हे कोशलेश ! हे करुणावतार ! जय स्वकीयोत्कर्षतया साक्षाद् भव। अत्र वीप्सायामपि द्विर्वचनाभावोऽतिमोदातिशय-द्योतनाय। १

रघुवशकमलकाननदिनेश !।
कन्दर्पकोटिकमनीयवेश !॥ २

पुन किम्भूत—रघुवश एव कमलकानन पद्मवन तद्विकासनाय दिनेश इव तत्सम्बुद्धौ। पुन किम्भूत—कदर्पात्कामात्कोटिगुण कमनीय मनोज्ञ वेश शरीरावेशो यस्य तत्सम्बुद्धौ। २

अथ कमनीयत्वेऽपि अद्भुतत्व दर्शयति—

कालाऽग्निसदृशकोपातिरेक !।
गन्धर्वगीतपूरितविवेक !॥ ३

पुन किम्भूत—कालाऽग्निना प्रलयानलेन सदृश कोपातिरेक क्रोधातिशयो यस्य तत्सम्बुद्धौ। अथ कोपातिरेकत्वेऽप्यद्भुतत्वमस्तीत्याह—पुन किम्भूत—गन्धर्वगीत पूरित पूर्ण विवेको विशिष्टज्ञान यस्य तत्सम्बुद्धौ। अस्यायमर्थ—य कश्चित्कोपवान् भवति तस्मिन्नीषदपि ज्ञातृत्व न सम्भवति त्वयि महती ज्ञातृतास्तीति चित्रमिति। ३

रजनीचरप्रकरविपिनदाव !।
वेदान्तवेदगणभणितभाव !॥ ४

पुन किम्भूत—रजनीचरा निशाचरा तेषा ये प्रकरा समूहा त एव विपिनानि वनानि तेषा दहनाय दाव इव वनाग्निरिव भवतीति तत्सम्बुद्धौ। पुन किम्भूत—वेदान्तवेदगणै भणित व्याख्यात भावो भावना त्रैकालिकसत्यत्व वा यस्य तत्सम्बुद्धौ। अनेन वेदान्ता वेदगणाश्च स्वस्वरूपाण्यधिष्ठाय भगवन्त त्वामनुवर्णयन्तोऽद्यापि न पार गच्छन्तीति सूचितम्। ४

वागीश ! सर्वविद्याविचार ! ।
ब्रह्मादिवन्द्य ! हृतभूमिभार ! ।। ५

पुन किम्भूत—वागीशस्येव सर्वविद्यासु विचारस्सञ्चारो यस्य तत्सम्बुद्धौ । यद्वा—हे वागीश ! अनेन ब्रह्माऽपि त्वमेवेति सूचितम् । सर्वस्वरूपा चासौ विद्या सर्वविद्या महामाया तस्या विचार सञ्चारो यस्मिस्तत्सम्बुद्धौ । अनेन य विराडित्याहु स त्वमेवेति सूचितम् । पुन किम्भूत—ब्रह्मादिभिर्वन्द्यते इति ब्रह्मादिवन्द्य तत्सम्बुद्धौ । अनेन ब्रह्मा मत्सूनुस्तत्सूनुर्भृगुस्तद्वशीयोऽयमिति मत्वा मत्कृतप्रवादरूपापराध क्षमस्वेति सूचितम् । पुन किम्भूत— हृत भूमिभारो येन तत्सम्बुद्धौ । ५

मदमोहकामपन्नगखगेश ! ।
शरदिन्दुनिभाननकुटिलकेश ! ।। ६

पुन किम्भूत—मदमोहकामा एव पन्नगा महासर्पास्तेषा ग्रसनाय खगेश इव भवतीति तत्सम्बुद्धौ । पुन किम्भूत—शरदि वर्तमानश्चासौ इन्दु तत्सदृशम् आनन यस्य तत्सम्बुद्धौ । पुन किम्भूत—कुटिला केशा यस्य तत्सम्बुद्धौ । ६

तडिदाभवसन ! रमणीयहास ! ।
कुन्दाभदशन ! मायाविलास ! ।। ७

पुन किम्भूत—तडिदाभानि वसनानि यस्य तत्सम्बुद्धौ । पुन किम्भूत—रमणीय हासो यस्य तत्सम्बुद्धौ । पुन किम्भूत—कुन्दाभा कुन्दकुड्मलप्रभा दशना यस्य तत्सम्बुद्धौ । पुन किम्भूत—मायया विलासो यस्य तत्सम्बुद्धौ ।७

अथाकर्णमाकृष्टधनुष श्रीमद्रामचन्द्र विलोक्याह—

जयदेवविनयमतिशयमवेहि ।
निजचरणकमलमधुमेऽव देहि ।। ८

हे ए ! हे विष्णो ! अव मा रक्ष । निजचरणकमलयो यो मधु मकरन्दस्तत् देहि ददस्व । अनेन भवदीयभक्तचरणारविन्दमकरन्दास्वादनायैहिका मम गति रक्ष नेतरामित्यनुक्तमपि सूचितम् । 'अ शिवे केशवे वायौ' इत्यक्षरनाममालिकायाम् । अ एव इ इति विग्रहे 'स्वार्थेऽपि' इतीञ्प्रत्यये सति तदनु 'यस्य लोप' इत्यकारलोपे सति 'इ' इति रूप भवति तत्सबुद्धौ हे ए ! इति साधु । अथ स्वस्य पुरो वर्तमानमहरह पिपठिषन्त स्वशिष्यवर्गमवलोकयन्नाह–विनीयते स्तव्यो विशिष्टता नीयतेऽनेन विनय स्तुति जयदेवेन निर्मित विनयो यस्मिन् गीते तत् जयदेवविनयम् अतिशयम् अवेहि स्वर्गापवर्गसाधनोत्कृष्टतर जानीहि । ८

इति गीत नवमम् ।

तदनुकृतधनु सहार श्रीराम प्रणमति वन्दे शारदेत्यादिना—

वन्दे शारदपूर्णचन्द्रवदन वन्दे कृपाम्भोनिधि,
वन्दे शम्भुपिनाकखण्डनकर वन्दे स्वभक्तप्रियम् ।
वन्दे लक्ष्मणसयुत रघुवर भूपालचूडामणि,
वन्दे ब्रह्म परात्पर गुणमय श्रेयस्कर शाश्वतम् ।। १५

हे भगवन् ! अह त्वा वन्दे प्रणमामि । अनेन मुनि स्वाश्रम प्रति अजिगमिषदिति सूचितम् । यत सर्वोऽपि यत्सकाशाज्जिगमिषति तमवश्यमेव नमतीति हेतो । किम्भूत त्वाम्–शारदपूर्णचन्द्रवदन शारद पूर्णश्चासौ चन्द्रस्तद्वद्वदन यस्य तम् हे भगवन् ! कृपाम्भोनिधि दयासिधु त्वामह वन्दे । हे भगवन् ! अथ शम्भुपिनाकभञ्जनकर त्वामह वन्दे । अनेन धनुर्भञ्जनद्वारा कृपालुना भवता मत्कोपातिरेकता निराकृतेति प्रेमातिशयत्व सूचितम् । पुनस्तदेव–स्वभक्ता प्रिया यस्य तम् एव विध त्वामह वन्दे । अथ कियन्ति पदानि गत्वा लक्ष्मण प्रति कृतानेकविवादाननुस्मृत्य पुनरागत्याह–हे भगवन् ! लक्ष्मणसयुत त्वामह वन्दे । किम्भूत त्वाम्–रघुवर रघूणा मध्ये वरस्तम् । यद्वा–रघवो वरा येन तम् । यद्वा–रङ्

(लङ्) घन्ते रागादीनतिक्रम्य त्वामनुवर्तन्त इति रघवस्त्वद्भक्तास्ते वरा यस्य तम् । पुन किम्भूतम्—भूर्लोक आदि कर्मभूमित्वात्प्रधानो येषा ते भ्वादय तेषा ये पाला भूपालास्तेषा चूडामणिस्त भूपालचूडामणिं लोकपालशिरोभूषणम् । पुनस्तदेव विवृणोति—हे भगवन् ! गुणाना प्राचुर्य यस्मिस्त गुणमयम् अनन्तगुणम् एवम्भूत ब्रह्म सर्वव्यापिनमीश्वर त्वामह वन्दे । किम्भूत त्वाम्—परात्परम् पर निर्गुण तस्मात्परम् उत्कृष्टम् । तत्तोऽप्यतिविलक्षणम् । अस्याऽयमर्थ—निर्गुण तत्ते स्वरूप कथचित्केचिद्विद्वासो मुनय सनकादयो जानन्ति । सगुणोऽय भगवान्यथाऽसि तथा तैरपि ज्ञातुमशक्योऽसि । पुन किम्भूतम्—श्रेय कल्याण करोतीति तम् । पुन किम्भूतम्—शाश्वत त्रिष्वपि कालेषु वर्तमानम् । अत्र पुन पुन क्रियापदापादनेन जिगमिषु परशुरामो रामाभिवादन कृत्वा कियत्कियद् दूरात्पुन पुनरागत्यागत्यानम्यानम्य कथचिन्निववृते इति स्नेहवैकल्य सूचितम् । १५



तस्मिन्गते परशुराममुनावरण्यमा-
नीय पङ्क्तिरथमात्मपुरोहितेन ।
पूजाञ्चकार महती विधिना विधिज्ञ ,
पप्रच्छ शारदशिव जनकाऽधिराज ।।१६

इति श्रीमद्रामगीतगोविन्दे महाकाव्ये
श्रीजयदेवकृतौ विजितपरशुरामो
नाम द्वितीय सर्ग ।। २

•

## द्वितीयसर्ग·

तस्मिन्परशुराममुनौ अरण्य वन गते सति जनकाधिराज आत्मपुरोहितेन सतानन्देन पङ्क्तिरथ दशरथम् आनीय विधिना शास्त्रोक्तविधानेन महती पूजा चकार। किम्भूतो जनकाऽधिराज विधिज्ञ शास्त्रविधानवित्। पूजनानन्तरम्। शारदा सरस्वती शिवा कल्याणरूपा यस्मिन्कर्मणि तत् शारदशिव स्निग्धवचन यथा स्यात्तथा पप्रच्छ कुशल पृष्टवान्। १६

इति श्रीमद्रामगीतगोविन्दार्थविवर्णने द्वितीय सर्ग। २



# तृतीयसर्गः

अथ श्रीजयदेव श्रीमद्भगवतो रामचन्द्रस्य विवाहोत्सव वर्णयति । दर्शिताध्वेत्यादिभि –

दर्शिताऽध्वा विनीतेन सतानन्दपुरोधसा ।
ययौ जनकराजस्य मण्डप मणिमण्डितम् ।। १

सतानन्दपुरोधसा दर्शित अध्वा मार्गो यस्य स दर्शिताध्वा श्रीरामचन्द्र जनकराजस्य मण्डप ययौ । किम्भूतेन सतानन्दपुरोधसा-विनीतेन विधिविचक्षणेन । किम्भूत मण्डपम्—मणिमण्डित नानामणिविभूषितम् । अस्यायमर्थ —नानामागलिक वस्तूपपन्नारार्तिकपात्रादिपाणिपुभि सह श्रीसतानन्दो द्वारदेशागतस्य तिलक कृत्वा मण्डपस्थलमानीयाधिष्ठापयामास । १

अपर किमिति चेत्तत्राह–

भृगुसनातननारदपर्वताऽ-
त्रिशुकदत्तमरीचय ।
पुलहदेवललोमशकुम्भजा ,
प्रणयपूर्वकमाहुरहो खिला ।। २

भृगुश्च सनातनश्च नारदश्च पर्वतश्च अत्रिश्च शुकश्च शौनकश्च दत्तश्च मरीचिश्च ते तथा । पुलहश्च देवलश्च लोमशश्च कुम्भजश्च ते तथा । प्रणयपूर्वक यथा स्यात्तथा खिला आहु ऋच प्रोचु —'खिल खण्डे ऋचि प्रोक्त ब्रह्मनिर्वाणकर्मसु' इति विश्व । २

सतानन्दवसिष्ठाभ्यामाज्ञप्तो रघुनन्दन ।
तस्थौ सिहासनेऽदिव्ये सीतया सह मञ्जुले ।। ३

रघुष्ववतीर्य लोकानानन्दयतीति रघुनन्दन श्रीरामचन्द्र सीतया जानक्या सह सिंहासने तस्थौ । किम्भूते सिहासने—अदिव्ये न अन्यत् दिव्य यस्मात् तत् अदिव्य तस्मिन् अदिव्ये अनन्योपमे । पुन किम्भूते—मञ्जुले मनोहरे । किम्भूती रघुनन्दन —सतानन्दवसिष्ठाभ्यामाज्ञप्त दत्तादेश । ३

## अथ गीतं दशमम्

तत्र सदेवनिकर पुरोहित — •

तत्र तदा काले देवनिकरै सह वर्तमान सदेवनिकर पुरोहित सतानन्द जगाद । ययेष्टया जनतया पुर पुरस्ताद् भाविवृत्त हितमभीष्ट यस्य स पुरोहित इति व्युत्पत्त्या यथार्थोऽस्म्यहमिति जहर्षेत्यर्थ ।

तदेव विवृणोति रामकरीरागेण श्रीरामरूपमित्यादिना गीतेन । गीतस्याऽस्य रूपको नाम ताल –

श्रीरामरूपमनूपम पश्यामि तापहरम् ।
जलदेन्द्रनीलमणिप्रभ शरदिन्दुवक्त्रधरम् ।। १ ध्रुवपदम्

अह श्रीरामस्य रूप श्रीरामरूप पश्याम्यवलोकयामि । किम्भूत श्रीरामरूपम्—तापहर तापत्रयापहम् । पुन किम्भूतम्—अनूपमम् अनुगता उप समीपे मा सीता यस्येति तत् । यद्वा—अनुगता पश्चाद् गता विमुखा उपमा यस्मिस्तत् । अनेन यथाऽस्ति तथा कथञ्चित्केनचित्प्रकारेणापि न वर्ण्यते । पुन किम्भूतम्—जलदश्च इन्द्रनीलमणिश्च तौ जलदेन्द्रनीलमणी तयोरिव प्रभा छविर्यस्य तत् । अत्यानन्दजनकत्वात् शरदिन्दुवच्च तत् वक्त्र शरदिन्दुवक्त्र तद्धरतीति तत् । १

कनकासने मणिमण्डपे सपरिच्छदेऽधिगतम् ।
जनकाऽधिराजसुतासमेतमशेषयोगिमतम् ।। २

पुन किम्भूत श्रीरामरूपम्—मणिनिर्मितश्चासौ मण्डप तस्मिन्मणिमण्डपे

मणिमयविवाहयूपस्थले कनकनिर्मित स्वर्णघटित च तदासन कनकासन तस्मिन् अधिगतम् अधिष्ठितम् । किम्भूते कनकासने—सपरिच्छदे सास्तरणोपधाने । पुन किम्भूत श्रीरामरूपम्—जनकाधिराजसुतासमेतम् । पुन किम्भूतम्—अशेषाश्च ये योगिनो मुनयस्तेषा मतम् इष्टम् । अनेनैतदेव योगिनो ध्यायन्ति चैतद्ध्यानादेव सर्वसिद्ध्यास्पदत्व लभन्त इति सूचितम् । २

चपलाविभूषितसजलजलधरमिव मनोहरणम् ।
किञ्जल्कपीतदुकूलसङ्कुलमिन्दिरारमणम् ॥ ३

पुन किम्भूतम्—मन हरतीति मनोहरणम्, मन कान्त मनोवशीकरणम् । कमिव चपलाविभूषितसजलधरमिव चपलाविभूषित सजल प्रावृट्कालिकश्चासौ जलधरस्तमिव । अत्र पूर्णोपमाऽङ्कार । 'तडित्सौदामनीविद्युच्चञ्चलाचपला अपि' इत्यमर । पुन किम्भूतम्—किञ्जल्कवत्पीत च तत् दुकूल तेन सकुल सम्पन्नम्— 'किञ्जल्क केसरो स्त्रियाम्' इत्यमर । दुकूलमुत्तरीयम् । पुन किम्भूतम्—इन्दिरा रमते यस्मिस्तदिन्दिरारमण रमाक्रीडास्पदम् । 'इन्दिरा लोकमाता मा क्षीरोदतनया रमा' इत्यमर । ३

केयूरकुण्डलमुकुटककणमुद्रिकारुचिरम् ।
मुक्ताभरदनमङ्गसुन्दरम गुलीरुचिरम् ॥ ४

पुन किम्भूतम्—केयूरौ च कुण्डले च मुकुट च ककणे च मुद्रिकाश्च ता केयूरकुण्डलमुकुटककणमुद्रिका ता रुचिरा अधिष्ठानातिशयत्वादतिमनोहरा यस्मिस्तत् । केयूरो बाह्वाभरणम् । स्पष्टमन्यत् । पुन किम्भूतम्—मुक्ताभा मौक्तिकप्रभा रदना दन्ता यस्य तत् । पुन किम्भूतम्—अङ्गसुन्दर कन्दर्पकमनीयम् । पुन किम्भूतम्—अङ्गुल्यो रुचिरा यस्मिस्तत् । ४

विद्याविचारणदक्षमच्छमपक्षपक्षकरम् ।
कल्याणभाजनमीशवन्दितमीतिभीतिशरम् ॥ ५

पुन किम्भूतम्—विद्याविचारणदक्षम् । पुन किम्भूतम्—अच्छ स्वच्छ महदादिचतुर्विंशतिविकारातिग पद्मपत्रवन्निर्लेपमित्यर्थं । पुन किम्भूतम् न कश्चन पक्षो येषा ते अपक्षा आत्माराम । यद्वा–अपक्षा पक्षशून्या तेषा पक्षकर तद्विपक्षोन्मूलम् । पुन किम्भूतम्–कल्याणभाजन कुशलपात्रम् । पुन किम्भूतम्––ईशवन्दितम् ब्रह्मेन्द्ररुद्रादिनुतम् । पुन किम्भूतम्–ईतिभीतिशरम् 'शॄ—हिंसायाम्' ईतिभीती शृणाति निहन्तीति तत् । 'अतिवृष्टिरनावृष्टिर्मूषका शलभा शुका, स्वचक्र परचक्र च सप्तैता ईतय स्मृता ।' 'भीतिर्भी साध्वस भयम्' इत्यमर । ५

आजानुबाहुमुदारविक्रममर्ककोटिरुचम् ।
नि.शेषलक्षणलक्षणीयमपास्तरोगशुचम् ।। ६

पुन किम्भूतम्—आजानुबाहुम् । पुन किम्भूतम्—उदारविक्रमम् । पुन किम्भूतम्—अर्कात्कोटिगुणा रुक् कान्तिर्यस्य तत् । पुन किम्भूतम्— नि शेषानि च तानि लक्षणानि तै लक्षणीयम् । 'विश्वसर्गविसर्गादिनवलक्षणलक्षितम् ।' अत्रैव सर्वं स्थावर जङ्गम दृश्यत इत्यर्थ । अपास्तौ दूरस्थौ रोगशुचौ यस्मात्तत् । ६

मन्दारमल्लीकुन्दतुलसीदामसवलितम् ।
श्रीवत्सचिह्नितवक्षस स्वर्णोपवीतचितम् ।। ७

पुन किम्भूतम्––मन्दारमल्लीकुन्दतुलसीदामभि सवलित परिवीत सवृत-मित्यर्थं । मन्दार कल्पद्रुम । पुन किम्भूतम्—वक्ष एव वक्षसम्, श्रीवत्स-चिह्नित वक्षस यस्य तत् । पुन किम्भूतम्—स्वर्णोपवीतचित स्वर्णनिर्मितयज्ञ-सूत्रोपशोभितम् । ७

जयदेवभाषितमष्टपदमहोनिराशपरम् ।
श्रेयो दिशत्वखिल जनाय निजाय लोकवरम् ।। ८

जयदेवभाषितमिदमष्टपद निजाय स्वश्रवणपठनगायनपराय जनाय अखिल समग्र श्रेय दिशतु ददातु। किम्भूतमष्टपदम्—अहोनिराशे दुरितदूरीकरणे पर प्रवीणम्। पुन किम्भूतम्—लोकवर लोकेच्छापिधानम्। ८

इति गीत दशमम्।

जनक वसिष्ठ प्रति—

जनक वसिष्ठ मुनिं प्रत्याह। अत्राहेति शेष किमिति चेत्तत्राह—

कुलपतिर्जगतामुपकारक श्रुतिविदा प्रथमो मुनिपुङ्गव।
विधिसुतस्त्वमसि प्रियकाक्षया कथय यत्प्रकरोमि तदेव हि॥ ४

हे भगवन्! हि यस्मात्कारणात् अस्माक कुलपति त्वमसि निमेरग्रेऽस्माक पुरोधास्त्वमेवासीरित्यर्थं। अत प्रियकाक्षया त्वमेव यत् कथय नदह करोमि कुर्याम्। कथम्भूतस्त्वम्—जगताम् उपकारक। पुन कथम्भूत—श्रुतिविदा प्रथम मुख्य। पुन कथम्भूत—मुनिपुङ्गव मुनिश्रेष्ठ। पुन कथम्भूत—विधिसुतो ब्रह्मतनय। ४

वसिष्ठ—

अत्रोवाचेति शेष।

राजर्षे! सर्वतत्त्वज्ञ! कि नियोज्य मया त्वयि।
प्रक्षालय पदाम्भोज रामस्य परमात्मन॥५

हे राजर्षे! हे सर्वतत्त्वज्ञ! हे सर्वसिद्धान्तवित् मया त्वयि नियोज्य किमिति किमपि नेत्यर्थं। रामस्य पदाम्भोज प्रक्षालय। किम्भूतस्य परमात्मन। ५

## अथ गीतमेकादशम्

अथ श्रीमद्रामचन्द्रचरणारविन्दानुभाव वर्णयति। देशवराडीरागेण अष्टतालितालेन सख इत्यादिना गीतेन—

सखे ! सानुराग भजतु रघुवीरपदमेकम् ।
सर्वसौभाग्यसम्पत्तिसन्दोहकरमिन्दु-
शतकोटिरुचिसेकम् ॥ १ ध्रुवपदम्

हे सखे ! सानुराग यथा स्यात्तथा भवान् रघुवीरपद भजतु । किम्भूत रघुवीरपदम्—एकमद्वितीयम् । चतुर्वर्गद कल्पद्रुम एतदेव नान्यदत एकतानतयैतस्यैव भजन कुरु नान्यस्येति भाव । तदेव विवृणोति—किम्भूत रघुवीरपदम्—सर्वसौभाग्यसम्पत्तीना सन्दोहकरम् अनन्तसम्पद्व्यूहप्रदम् । पुन किम्भूतम्—इन्दवश्च ते शतकोटय इन्दुशतकोटय इन्दुशतकोटीनामिव रुचिसेक दीप्तिप्रकाशो यस्मिस्तत् । १

केतुदम्भोलिरेखाङ्कुशच्छत्रवरचिह्नमम्भोजहारम् ।
ब्रह्मवागीशसनकादिमुनिसेवित वेदवेदान्तमतसारम् ॥ २

पुन कथम्भूतम्—केतुश्च दम्भोलिरेखा च अङ्कुशश्च छत्र च तेषा वराण्युत्कृष्टानि चिह्नानि यस्मिस्तत् । केतु पताका । 'दम्भोलिरशनिर्द्वयो' इत्यमर । पुन किम्भूतम्—अम्भोजरेखा हारा मनोहरा यस्मिस्तत् । 'हृञ् हरणे' 'ज्वलादेर्ण' इति णप्रत्यये कृते हरति मन स्ववशीकरोतीति हारा । पुन किम्भूतम्—ब्रह्मवागीशसनकादिमुनिसेवितम् । वागीशो बृहस्पति । पुन किम्भूतम्—वेदश्च वेदान्तश्च तौ तयो मते सार साराशभूतम् । २

नम्रदिक्पालगणमौलिमणिमालिकाकान्तिविस्तरणमतिशोभम् ।
सिद्धविघ्नेशयज्ञेशकीनाशवसुतुषितगन्धर्वकृतलोभम् ॥ ३

पुन किम्भूत रघुवीरपदम्—नम्राश्च ये दिक्पाला नम्रदिक्पाला तेषा ये गणा समूहा नम्रदिक्पालगणा तेषा ये मौलय मुकुटानि तेषु गुम्फिता या मणिमालिका नम्रदिक्पालगणमौलिमणिमालिका तासा कान्तिविस्तरण यस्मिस्तत् । पुन किम्भूतम्—अतिशयेन शोभा यस्य तत् । पुन किम्भूतम्—सिद्धाश्च विघ्नेशश्च यज्ञेशश्च कीनाशश्च वसवश्च तुषिताश्च गन्धर्वाश्च ते तै कृत लोभो यस्मि-

स्तत् । विघ्नेशो गणेश । यक्षेश कुबेर । 'सूर्यसूनुर्यमो धर्म कीनाश सर्वभूतहृत्' इति कोशात्' 'आदित्या आदितेयाश्च तुषिता भास्वरानिला , अमृतान्धसो यज्ञभुज कामदा लेखका शुभा ।' इति कोशात् । ३

पूरितानन्दकामारिशिरसि स्फुरद्विमलगगौघजलसिक्तम् ।
शापवशगौतमीपापपरिणामहरमरुणमुद्योतद्युतिरक्तम् ॥ ४

पुन किम्भूतम्--पूरितानन्दकामारिशिरसि स्फुरन्ती विमला चासौ गङ्गा तस्या य ओघ जलप्रवाह तस्य॰यज्जल तेन सिक्तम् । यद्वा--'षिच--क्षरणे' इति धात्वर्थानुसारेण पूरितानन्दकामारिशिरसि स्फुरद्विमलगङ्गौघजल सिक्त प्रस्तुत यस्मात्तत् पुन किम्भूतम्--शापवशा भर्तृदत्तशापाभिभूता चासौ गौतमी अहल्या तस्या पापपरिणामहर पापविपाकघ्नम् । पुन किम्भूतम्--अरुणम् । 'अव्यक्तरागस्त्वरुण श्वेतरक्तस्तु पाटल' इत्यमर । अरुणत्वे हेतुमाह--उत्कर्षेण द्योतन्ते इति उदद्योता नखा तेषा या द्युतिर्दीप्ति तया रक्तम् । यद्वा--उदद्योता दद्युतिर्यस्य तत् । किम्भूतम्--रक्तम् अलक्तादिना रञ्जितम् । 'रक्त नील्यादिरागि च' इत्यमर ।४

अञ्जनीनन्दनप्रेमकासारसरसीरुह योगिगणयत्नम् ।
इन्दिरापाणिपाथोजवरलालित सद्वृत्तपावन निपुणरत्नम् ॥ ५

पुन किम्भूतम्--प्रेमैव जल यस्मिन् स प्रेमजल प्रेमजलश्चासौ कासार प्रेमकासार अञ्जनीनन्दनश्चासौ प्रेमकासार तस्मिन् सरसीरुहमिव भवतीति तत् । 'पद्माकरस्तडागोऽस्त्री कासार सरसीसर' इत्यमर । पुन किम्भूतम्--योगिगणा कृतयत्ना प्राणायामादिपरा यस्मै तत् । पुन किम्भूतम्--इन्दिरा पाणिपाथोजवराभ्या लक्ष्मीकरकमलवराभ्या लालित कृतलालनम् । पुन किम्भूतम्--सत् समीचीन च तत् वृत्त सद्वृत्त सद्वृत्तेन पावन पवित्रीकरण यस्य तत् । वृत्तान्तमात्रेणैव जगत्पवित्रीकरणे समर्थम् । निपुणाना रत्नमिव भवतीति तत् । ५

विपुलविस्तारससारसागरतरणशरणशुभकल्पदृढनावम् ।
काममदमोहलोभादिकाननमहाविधविषमतमदावम् ॥ ६

पुन किम्भूतम्—विपुलविस्तारससारसागरतरणाय शरण रक्षाकर्त्री शुभकल्पा शोभनरचनाविशिष्टा दृढा सुपुष्टा नौरिव भवतीति तत् । अत्र 'टाडका' इति अप्रत्यये कृते तदनु आवादेशे च कृते प्रयोगसिद्धिर्भवतीति ज्ञेयम् । 'कल्प दृढे समर्थे च रचनाया कल्पमुच्यते, कल्प लये तथा लोमनीलकर्मणि भास्वरे ।' इति हलायुध । 'शरण गृहरक्षित्रो' इत्यमर । काममदमोहलोभादीना यत्कानन तद्दाहाय महाविधोऽनेकविध विषमतमोऽतिविषमो दाव इव भवतीति तत् । 'वने च वनवह्नौ च दवदावौ' इति कोशात् ।६

दर्शनादेव लोकार्तिशोकापह राक्षसाऽभिभवमभिरामम् ।
कामतरुकाममणिकामधुक्कोटिगुणदानकरपरमविश्रामम् ॥ ७

पुन किम्भूतम्—दर्शनादेव लोकार्तिशोकापह जगदाधिव्याधिनाशकम् । पुन किम्भूतम्—राक्षसाना रावणादीना यद्वा—राक्षसा इव भवन्तीति राक्षसा रागादय तेषाम् अभिभवो यस्मात्तत् । तदेव विशिनष्टि विशेषणद्वयेन पुन किम्भूतम्-अभि न भीर्भय यस्मिस्तत् । पुन किभूतम्—रमन्ते योगिनोऽस्मिन्निति राम योगिना नियतस्थानम् । पुन किम्भूतम्—अविश्राम विश्रामरहित यथा स्यात्तथा कामतरुकाममणिकामधुग्भ्य कोटिगुण दानकर्तृणा श्रेष्ठम् । कामतरु कल्पद्रुम । काममणिश्चिन्तामणि । कामदा 'कामधेनु स्यात्कामदुग्धा च कामधुक्' इति कोशात् । ७

जयति गम्भीरजयदेवकविभारती पुण्यदा शमितपरितापा ।
राजराजेन्द्ररघुवीरचरणाम्बुजस्मरणशुभकरणगतपापा ॥ ७

इय गम्भीरजयदेवकविभारती जयति । किम्भूता—पुण्यदा । पुन किम्भूता—शमितपरितापा दैहिकादितापापहा । पुन किम्भूता—राजराजेन्द्र

रघुवीरचरणाम्बुजस्मरणमेव शुभकरण कल्याणकरण गतपाप पापापह यस्या सा । ८

इति गीतमेकादशम् ।

श्रुत्वा महर्षेर्वचन मनोहर प्रक्षाल्य पादौ विधिना महीपति ।
चकार वैवाहिककर्म शोभन श्रियोऽनुरूप स्वकुलोचित मुदा ।। ६

महीपति महर्षे वचन श्रुत्वा पादौ प्रक्षाल्य श्रियोऽनुरूप विभूतिसदृश यथा स्यात्तथा । स्वकुलोचित यथा स्यात्तथा । मुदा आनन्देन । विधिना शास्त्रोक्त-विधानेन । वैवाहिककर्म चकार कन्यासम्प्रदान चकार । किम्भूत वैवाहिककर्म—शोभन यथेष्टसम्पादनेन स्वर्गापवर्गाद्यात्मगुणैर्विरोचमानम् । किम्भूत महर्षे-र्वचनम्—मनोहर मनोज्ञम् । ६

लब्ध्वा धनानि सुरभीर्महिषीस्तुरगान्,
— दन्तावलाश्च शिविका वसनानि भूय ।
दासीश्च दासनिवहान्मनुवशवीरा,
याता नरेन्द्रतनयाः पुरमात्तदारा ।। ७

नरेन्द्रस्य तनया नरेन्द्रतनया रामादय धनानि स्वर्णमुद्रादिसपद । च पुन सुरभी । च पुन महिषी । च पुन तुरगान् । च पुन दन्तावलान् । च पुन शिबिका । पुन वसनानि । पुन दासी । च पुन दासनिवहान् सेवकसमूहान् लब्ध्वा भूय पुरम् अयोध्या याता प्राप्ता बभूवु । नरेन्द्रतनया इत्यत्र बहुवच-नारोपणेन रामेण सहान्येषामपि विवाहोत्सव निरूपित । 'दन्ती दन्तावलो हस्ती' इत्यमर । किम्भूता नरेन्द्रतनया —मनुवशवीरा । ७

स्फाटिक विविधतोरणस्रज जातरूपकलश नभोलिहम् ।
सौधमुन्नतपताकमादरादाविवेश रघुवशवर्द्धन ।। ८

तत्समये रघुवशवर्द्धन श्रीरामचन्द्र । सौध धवलगृहम्, आदरात् आविवेश

प्रविष्टवान् । अथेति शेष । किम्भूत सौधम्—स्फाटिक स्फटिकमणि-निर्मितम् । पुन किम्भूतम्—तोरणे बहिर्द्वारि निबद्धा स्रक् तोरणस्रक् विशिष्टा विधा प्रकारो यस्या सा विविधा विशिष्टप्रकारा तोरणस्रक् यस्य तम् । यद्वा—विशिष्टा विधा वधूप्रवेशविधिर्यस्मिन्स विविध विविधश्चासौ तोरण तस्मिन्स्रक् यस्य तम् । 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमर । 'विधा विधौ प्रकारे च' इत्यमर । पुन किम्भूतम्—जातरूपस्य कलशो यस्मिंस्तम् । 'जातरूप सुवर्णं च' इत्यमर । पुन किम्भूतम्–नभोलिहमुच्चैस्तरम् । पुन किम्भूतम्—उन्नता उच्चैस्तरा पताका यस्य तम् । 'सौधोऽस्त्री धनिना वास' इत्यमर । ८

## अथ गीतं द्वादशम्

अथ सरयूतीरे विहरन्त रामचन्द्र प्रति नागरिकोक्तिर्वर्ण्यते । गुर्जरीरागेण रूपकतालेन विहरतीत्यादिना गीतेन—

विरहति हरिरिह सरयूकूले ।
पद्मरागचामीकरमरकत-
वद्धविविधतरुकूले ॥ १ ध्रुवपदम्

इहाऽस्मिन् सरयूकूले हरति दु खमिति हरि श्रीरामचन्द्र विहरति । किम्भूते सरयूकूले—पद्मरागचामीकरमरकतबद्धानि विविधानि बहुविधानि तरुकूलानि बृक्षतटानि यस्मिस्तस्मिन् । विविध स्याद्बहुविधौ नानारूप पृथग्विध' इत्यमर । पद्मरागोऽरुणमणि । मरकत श्याम मणि । १

सादरमज्जदमितयुवतीकुचकुङ्कुमपिङ्गलनीरे ।
शमदमादिसाधनविवेकवशमुनिजनसकुलतीरे ॥ २

पुन किम्भूते—सादरा मज्जन्त्य अमिता असख्यातास्च या युवतय तासा ये कुचा तेषा यत्कुङ्कुम तेन पिङ्गल नीर यस्मिन् तस्मिन् । पुन

किम्भूते—मनोनैश्चल्य शम, बाह्येन्द्रियनैश्चल्य दम, तदादीनि च तानि साधनानि तै सहितो यो विवेको ज्ञान स वशे सध्रीनत्वे येषा ते । यद्वा—शमदमादिसाधनविवेकेन वश कान्तिर्येषा ते शमदमादिसाधनविवेकवशा ते च ये मुनिजना तै सकुल सङ्कीर्णं तीर जलाभ्यर्णभूमिर्यस्मिस्तस्मिन् । 'वश कान्तौ' इत्यमर । 'पार—तीरकर्मसमाप्तौ' चुरादि अदन्तश्च । तीरयति तरयति तरणकर्मसमाप्ति करोतीति विग्रहे 'पचाद्देर' इत्यप्रत्यये तीरमिति साधु । २

विलिखितमकरनिशाकरदिनकरचञ्चलविशदपताके ।
दिव्याऽसनविशेषपूरितदूरीकृतदुरितविपाके ॥ ३

पुन किम्भूते—विलिखितमकरनिशाकरदिनकरा चञ्चला विशदा पताका यस्मिन् तस्मिन् । मकरो मत्स्यविशेष । दूरीकृत दुरितविपाक पापपरिणामो येन तत् दिव्यासनविशेषै पूरित च तत् दूरीकृतदुरितविपाक तत् तस्मिन् । यद्वा—गमनमात्रेणैव दूरीकृत दूरीभूत दुरितविपाको येषा ते दूरीकृतदुरितविपाका दिवि भवानि दिव्यानि च तानि आसनानि विमानानि तेषु विशेषेण पूरिता पूर्णीकृता दूरीकृतदुरितविपाका येन तस्मिन् । ३

एतावता तत्र गताना मनुष्याणा मुक्तिर्भवतीत्युक्त्वाऽथ तत्रत्या पक्षिणोऽपि जीवन्मुक्ता इति वदति । सारसेत्यादिना—

सारसजलकोयष्टिमरालकचक्रविजृम्भितनादे ।
पङ्केरुहकेदारविबोधनपरिमलशमितविषादे ॥ ४

पुन किम्भूते—सारसजलकोयष्टिमरालकचक्राणा विजृम्भित नादोऽव्यक्त यस्मिन् तस्मिन् । अनेन विमानान्यारुह्य गच्छतो मनुष्यान् वीक्ष्य यूय यात यात वय त्वत्रैव तिष्ठेम नागच्छेम नागच्छेमेति वदन्तीति सूचितम् । जलकोयष्टि टिट्टिभ । मरालो हस । चक्र चक्रवाक । पङ्केरुहकेदारान् विबोधयति विज्ञापयतीति पङ्केरुहकेदारविबोधन एवविधो य परिमल जनमनोहरो गन्ध तेन

शमित शान्त विषाद श्रमो यस्मिन् येन वा तस्मिन् । 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमर । ४

यातायाततुरङ्गमतङ्गजकरभमनुजरथयाने ।
दिशि दिशि निजविश्रामकामवहुविरचितरुचिरविताने ।। ५

पुन किम्भूते—यातायातानि तुरङ्गमतङ्गजकरभमनुजरथयानानि यस्मिन तस्मिन् । 'मतङ्गजो गजो नाग ' इत्यमर । करेण भातीति करभ करिशावक । मनुजो मनुष्य । यान शिबिकादिकम् । पुन किम्भूते—दिशि दिशि निजविश्रामाय काम यथेष्ट बहून्यसङ्ख्यातानि विरचितानि निर्मितानि रुचिराणि मनोज्ञानि वितानानि पटमण्डपानि यस्मिन् । ५

राजदनेकलवङ्गलतालवलीमुनिपादपचूते ।
भ्राजिततुरगतरङ्गविकाशलसत्तुलसीदलपूते ।। ६

पुन किम्भूते—राजन्त अनेके लवङ्गलतालवलीमुनिपादपचूता यस्मिन् तस्मिन् । लवली लताजातिविशेष । मुनिपादप अगस्त्य । चूत आम्र । पुन किम्भूते—भ्राजित शोभितस्तुरग इव अश्व इव यस्तरङ्गविकाशस्तस्मिन् लसच्च यत्तलसीदल तेन पूते । ६

देवगृहैरभित स्फुरति प्रणवादिकमन्त्रविचारे ।
ध्यानपरायणसिद्धसमूहनिराकृतविषयविकारे ।। ७

पुन किम्भूते—अभित सर्वत देवगृहै देवालयै स्फुरति । पुन किम्भूते । प्रणवादिकाश्च ये मन्त्रा तेषा विचारो यस्मिन् । पुन किम्भूते—ध्यानपरायणाश्च ये सिद्धास्तेषा ये समूहा समुदायास्तैर्निराकृत निस्सारित विषयादिक विकारो यस्मात् तस्मिन् । अय भाव —हे नागरिका ! सरयूतटे एव विधा सिद्धा सन्ति येषा पवनस्पर्शदर्शनादिभिर्महापातकिनोऽपि शुद्धा भवन्ति तत सर्वं एव यूय वय च तत्रैव वसेमेति । ७

श्रीजयदेवकवेरुदित सरयूसरिदुज्ज्वलगानम् ।
सर्वसतामनिश भवतु प्रियद सुखमोदनिधानम् ॥ ८

श्रीजयदेवकवे उदित वचन सर्वसताम् अनिश सदैव यथा स्यात्तथा प्रियद भवतु । किम्भूतम्—सुखमोदनिधानम् । पुन किम्भूतम्–सरयूसरिदुज्ज्वलगानम् । 'व्याहार उक्तिर्लपित भाषित वचन वच' इत्यमर । उदितमिति भाषितस्य पर्याय । ८

इति गीत द्वादशम ।

आखेटैरिपुमोक्षणैरविरत विद्याविचारोत्सवै ,
शीलैर्यज्ञजपैर्मनोरमरुचा कीर्त्या च शुश्रूषया ।
चित्रैर्वाद्यकलाभिरश्वशिविकाहस्त्यावरोहैर्बलै ,
राम सत्यपराक्रमैरनुदिन प्रीत्या सिषेवे नृपम् ॥ ९

तदनु राम अनुदिन प्रतिदिन नृप पितर दशरथ सिषेवे सेवितवान् स्ववशी चकारेत्यर्थ । कै —आखेटै मृगयाभि । च पुन रिपुमोक्षणै शत्रुभ्य राज्यादे मोक्षणानि तै । यद्वा—स्ववशमानीय तेषामेव विमोक्षणै । च पुनः विद्याविचारोत्सवै । च पुन शीलै स्वभावै । च पुन यज्ञजपै । च पुन मनोरमरुचा मनोरमया कान्त्या । च पुन कीर्त्या यशसा । च पुन शुश्रूषया परिचर्यया । च पुन वाद्यकलाभि वाद्यविभेदै । च पुन. अश्वशिविकाहस्त्यावरोहै । च पुन बलै. सैन्यै । च पुन सत्यपराक्रमै । किम्भूतैरेतै सर्वै —चित्रै आश्चर्यरूपै । ९

एकस्मिन्समये राजा गृहीत्वा दर्पण करे ।
पश्यन्निजानन शौक्लच कर्णमूले ददर्श ह ॥ १०

एकस्मिन्समये राजा दशरथ करे दर्पण गृहीत्वा निजानन पश्यन् कर्णमूले शौक्लच केशशुक्लत्व ददर्श । १०

प्रत्युवाच कुलाचार्य वसिष्ठ मुनिपुङ्गवम् ।
राघवाय पुरो राज्य देहि मह्य तपोवनम् ।। ११

च पुन कुलाचार्यं मुनिपुङ्गवं मुनिश्रेष्ठ वसिष्ठ प्रति इत्युवाच । इति किम्-हे गुरो ! राघवाय श्रीमद्रामचन्द्राय पुरो राज्यम् अयोध्याधिपत्य देहि । च पुन मह्य तपोवन देहि चेति शेष । इति । ११

## अथ गीतं त्रयोदशम्

श्रुत्वा कैकेयी—

कैकेयी नृपमध्यमपत्नी श्रुत्वा नृपवचन श्रवण कृत्वा उवाच । अत्रो-वाचेति शेष ।

तद्वचन चाथ गुर्जरीरागेण यतितालेन श्रृणु ममेत्यादिना गीतेनाह—

शृणु मम वचनमिद नृपभूषण !
सत्यसिन्धुविद्याहतदूषण !
देहि वर नाथ!जहि न धर्मपथम् ।। १ ध्रुवपदम्

हे नृपभूषण ! ममेद वचन शृणु । हे नाथ ! वर देहि वरदान कुरु । च पुन धर्मपथ न जहि धर्ममार्गविनाश मा कुरु । तत्कुत —यत किम्भूत—सत्यमेव सिन्धु सर्वलाभत्वाद्रत्नाकरो यस्यामेव विधा या विद्या सा हतदूषणा अनभ्यासादि-दोषशून्या यस्मिस्तत्सम्बुद्धौ हे सत्यसिन्धुविद्याहतदूषण ! अनेन य कश्चिदेव विधोऽस्ति स कदाचिदपि धर्ममार्ग न जहातीति सूचितम् । अत्र चेति शेष । १

अथ ब्रूहि किं कथयसीति ब्रुवन्त राजानमाह कैकेयी—

देवासुररणमध्य ! सलीलम् ।
भङ्गमगमदुत्तमरथकीलम् ।। २

देवा असुराश्च रणे मध्या अनुत्कृष्टा यस्मात्तत्सम्बुद्धौ हे देवासुररणमध्य ! यदा उत्तमरथकील भङ्गम् अगमत् भग्नीबभूव यदेति शेष । २

निजकरमर्प्य तत्र धृतशायक ! ।
दत्त विजययशस्त्वयि नायक ! ॥ ३

तदा हे धृतशायक ! तत्र रथकीले निजकरम् अर्प्य हे नायक ! त्वयि वर्तमान यश मया दत्त रक्षितम् आसीत् 'देङ्—पालने' अदायीति दत्तम् । अनेनैव न कृत चेत्तर्हि दशरथादन्य सदा विजयवान्नास्तीति भूतले यत्तव यशोऽस्ति तदद्य दुर्घट भवेदिति सूचितम् । ३

समयमवाप्य वदति विज्ञानी ।
तस्मादिहि न निनिन्दितवानी ॥ ४

हे राजन् ! तस्मात्कारणात्समय पूर्वकृत सिद्धान्तम् इहि प्राप्नुहि । ननु कदा मया समय कृत इति चेत्तत्राह—ई इति खेदे निनिन्दितवान् न नितरा निन्दितकर्मप्रवृत्तौ मा भव । विज्ञानी समयम् अवाप्य वदति । इण्—धातोरिहीति रूपम् । 'समया शपथाचारकालसिद्धान्तनिश्चया ' इति कोशात् । समीयते निश्चीयते जनैरिति समय । ४

कुरु भरत कोशलपुरनाथम् ।
रघुपतिरेतु विपिनमुनिगाथम् ॥ ५

अतो हे राजन् ! भरत कोशलपुरनाथ कुरु । रघुपति विपिने वसन्तो ये मुनय तेषा गाथा यत्र स विपिनमुनिगाथो वन्यमुनिमार्गस्तम् एतु प्राप्नोतु । ५

न तु तव धर्महानि न हि पापम् ।
तामुपनयति सहितमहितापम् ॥ ६

तु पक्षान्तरे । अनेवकृते तवाभिलषितपक्षे तव धर्महानि पाप न स्यादिति न, किन्तु स्यादेव । धर्मस्य हानिर्यस्मिन् तद्धर्महानि । तत्कुत —हि यस्मात्कारणात्

सहित युगपत्प्राप्त महितापो यस्मिस्तत् सहितमहितापम् एव विध यत्कर्म तदेव ताम् उपनयति धर्महानि करोति । अनेन प्रतिश्रुतस्यादातुस्तत्सहितमाहात्म्य-सन्तापापत्तित्वद्रामाभिषेके महती धर्महानिर्दृश्यतेऽतस्तन्निवृत्तो भवेति सूचितम् । 'तु पादपूरणे भेदे समुच्चयेऽवधारणे, पक्षान्तरे नियोगे च प्रशसाया विनिग्रहे ।' इति मेदनी । ६

एवमुक्त्वा पुन किमकरोदित्यपेक्ष्याऽऽहाऽऽकलय्येति—

आकलय्य भूपतिरिपुकल्पम् ।
मनसि चकार जीवसकल्पम् ।। ७

भूपतये रिपो इव कल्प रचना यस्मिन्कर्मणि तत् भूपतिरिपुकल्पम् एव यथास्यात्तथा आकलय्याभाष्य मनसि जीवसङ्कल्प चकार । यावदेवाह जीवेय तावदेतदेवमेव भविष्यति नान्यथेति मनश्चक्रे । 'कल्प दृढे समर्थे च रचनाया कल्पमुच्यते, कल्प लये तथा रोमनीलकर्मणि भास्वरे ।' इति हलायुध । ७

श्रीजयदेवकरचितरहस्यम् ।
साधुजनस्य तनोतु यशस्यम् ।। ८

श्रीजयदेवकेन रचित रहस्य पदगोप्यत्व यस्मिन् तदेवभूतमेतद्गीतम् । विद्याया सिद्ध साधु स चासौ जन साधुजन तस्य अग्रे यशस्य तनोतु यशसे हितकृद् भवतु । अत्र 'अग्रे' इति शेष । ८

इति गीत त्रयोदशम् ।

श्रुत्वा नृपो दशरथो वचन महिष्या,
भिन्नो बभूव हृदये करुणावतार. ।
राम महेन्द्रमणिसुन्दरदेहकान्ति-
माहूय काननगमाय समादिदेश ।। १२

नृप दशरथ महिष्या कैकेय्या वचन श्रुत्वा हृदये यदा भिन्नो विद्धो बभूव तदा राममाहूय काननगमाय समादिदेश। अनेन दस्युजनेन हृदि विद्ध मार्गंग पान्थो यथा तच्चिकीर्षित करोति एवमेव राजमार्गगतेन दशरथेन कैकेय्याश्चिकीर्षित कृत न स्वत इति सूचितम्। कि चात्र गमाय इति पदेन वने सदेशमिव कथयित्वा पुनस्तूर्णमेवागच्छेत्तत्रैव न वसेदिति सूचितम्। किम्भूतो नृप—करुणाया अवतार करुणावतार॰। किम्भूत रामम्—महाश्चासौ इन्द्रमणिस्तस्येव सुन्दरा मनोहरा देहकान्तिर्यस्य तम्। १२

वैदेहीसहजानुजो रघुवरो धृत्वा जटा वल्कल,  
नत्वा भूपतिमादरादनु ययौ तच्छृङ्गवेर पुरम्।  
नानापुष्पफलैर्निषादपतिना सम्मानितश्चिन्मयो,  
भारद्वाजमवेक्ष्य रम्यविधिनाऽपश्यत्प्रयाग पुन ॥ १३

वैदेही च सहजश्च वैदेहीसहजौ तावेवानुजीविनौ यस्यैवविधो रघुवरो राम जटा धृत्वा, तदनु—वल्कल धृत्वा, तदनु—आदरात् भूपति नत्वा शृङ्गवेरपुर ययौ। तदनु—निषादपतिना नानापुष्पफलै रम्यविधिना सम्मानित सम्पूजित। तदनु—भारद्वाजम् अवेक्ष्य तस्य दर्शन कृत्वा पुन प्रयागम् अपश्यत्। किम्भूत—चिन्मय चित्स्वरूप। 'जीव—प्राणधारणे' अनु स्वामिन पश्चाज्जीवत इति विग्रहे 'नाम्नि च' इति डप्रत्यये कृते अनुजाविति साधु। तदिति अव्ययम्। अत्र तत् अनु इति पदद्वयस्य सर्वत्रान्वयोऽस्ति। १३

## अथ गीतं चतुर्दशम्

अथ लक्ष्मणो राम प्रति प्रयागानुभावमवर्णयत्तमेव गुर्जरीरागेण प्रतिमण्ठतालेन पश्य पश्येत्यादिना गीतेनाह—

पश्य पश्य रघुवीर! प्रयागम्।  
मज्जदखिलमुनिगणमतिरागम्,  
सीतया सह सन्ततमेतम्॥ १ ध्रुवपदम्

हे रघुवीर ! सीतया सह सन्तत सविस्तरमेत प्रयागम् अतिराग यथाऽस्यात्तथा पश्य पश्य। किम्भूतम्—मज्जन्त न खिला अखिला पूर्णा निरभिलाषुका मुनिगणा यत्र तम्। १

नीलपीतसितचित्रपताकम् ।
सुखसमूहशिथिलीकृतनाकम् ।।२

पुन किम्भूतम्—नीलपीतसितचित्रा पताका यस्मिस्तम्। पुन किम्भूतम्—सुखसमूहेन शिथिलीकृत निरभिमानीकृत नाकि स्वर्गो येन तम्।२

सिंहासनपरिपूरितकूलम् ।
ज्ञानयोगजपसाधनमूलम् ।।३

पुन किम्भूतम्—सिहासनै परिपूरित कूल नद्योस्तट यत्र तम्। पुन किम्भूतम्—ज्ञानयोगजपादीनि च यानि साधनानि मुक्त्युद्धर्तॄणि तेषा मूलम्।३

वाणीजह्नुतरणिजासङ्गम् ।
निमिषादेति कलुषमतिभङ्गम् ।।४

पुन किम्भूतम्—यत्र निमिषात्पलमात्रादेव कालात्कलुष कल्मषम् अतिभङ्गम् एति। अत्र 'ऋतआदियोगे पञ्चमी' इति सूत्रेण कालावधौ पञ्चमी कृता आमुक्ते ससार इत्यत्र यथा। पुन किम्भूतम्—जह्नुश्च तरणिश्च तौ ताभ्या जायेते जह्नुतरणिजे वाणी च जह्नुतरणिजे च तासा सङ्गो यत्र तम्।।४

उपवनवनभूषितमहिदेशम् ।
सकलकलाकल्पितशुभवेशम् ।।५

पुन किम्भूतन्—उपवनैरारामै वनै काननै भूषित महिदेशो यस्य तम्। अत एव पुन किम्भूतन्—सकलकलाभि समग्ररचनाविशेषै कल्पित शुभ शोभन वेशो यस्य स इव भवतीति तम्। विश्यत इति वेशो वेष । ५

मनुजाकारसुरासुरनागम् ।
विहितनृपतितापसवरयागम् ॥६

पुन किम्भूतम्–मनुजाकारा मनुष्यरूपेणागच्छन्त सुरा असुरा नागाश्च यत्र तम् । विहिता नृपतिभिस्तापसवरैश्च यागा यत्र तम् । ६

मुक्तिचतुर्विधसुलभमनूपम् ।
राजमाननानामणियूपम् ॥७

पुन किम्भूतम्–मुक्तिर्या चतुर्विधा सा सुलभा यत्र तम् । अत एव पुन किम्भूतम्–अनूपमनूपमम् । पुन किम्भूतम्–राजमाना देदीप्यमाना नानामणि-यूपा यत्र तम् । यूपो यज्ञस्तम्भ ।७

श्रीजयदेवभणितमिति गीतम् ।
सुखयतु रामचरणमुपनीतम् ॥८

श्रीजयदेवेन भणितम् इत्येतद्गीत रामचरणमुपनीतमुपाश्रित जन सुखयतु सुखिन करोतु ।८

इति गीत चतुर्दशम् ।

एतद्गुणविशिष्ट प्रयागमालोक्य पुन किमकुरुतामित्यापेक्ष्याह–

पाणौ बाणशरासनौ कटितटे तूणीरचर्माम्बरौ,
पूर्णेन्दुप्रतिमाननौ च शिरसि स्फूर्जज्जटामण्डलौ ।
इन्द्वर्कायुततेजसौ जलधरश्यामौ सता वल्लभौ,
पृच्छन्तौ सुखवासिनिर्जनपथ प्रीत्या मनोहारिणौ ॥१८

•

इति श्रीमद्रामगीतगोविन्दे महाकाव्ये
जयदेवकृतौ जगन्निवासो
नाम तृतीय सर्ग ॥ ३

•

## तृतीयसर्ग

सता सज्जनाना वल्लभौ प्रियौ रामलक्ष्मणौ सुखस्य सुखदु खात्यस्य वास सुखवास स विद्यते येषा तेषा यन्निर्जन तस्य य पन्था सुखवासिनिर्जनपथ त प्रीत्या पृच्छन्तौ आस्ताम् । निर्गता जना मनुष्या यस्मात्तत् निर्जन वनम् । सुखदु खात्ययवता जनत्व नास्ति जायत इति जन इति व्युत्पत्ते । 'श्रीर्गुणा नैरपेक्ष्याद्या सुख दु खसुखात्यय । दु ख कामसुखापेक्षा पण्डितो बन्धमोक्षवित् ।' इति स्मृते । किम्भूतौ–पाणौ बाणशरासनौ । पुन किम्भूतौ–कटितटे तूणीर-चर्माम्बरौ । पुन किम्भूतौ–पूर्णेन्दुप्रतिमाननौ । पुन किम्भूतौ—स्फूर्जज्जटा-मण्डलौ । पुन किम्भूतौ—इन्द्वर्काभ्याम् अयुतगुण तेजो ययोस्तौ । पुन किम्भूतौ–जलधरश्यामौ । गौरस्याऽपि सौमित्रे श्यामतानिरूपणेनातितन्मयत्व दर्शितम् । भागवते यथा–'यत्र यत्र मनो देही धारयेत्सकल धिया । स्नेहाद्द्वेषाद्भयाद्वापि याति तत्तत्सरूपताम् ।' इति । किंच—दु खावस्थात्वमपि सूचितम् । दु खितोपि श्यामो भवति । पुन किम्भूतौ—मनोहारिणौ ।१४

इति श्रीमद्रामगीतगोविन्दार्थविवर्णने तृतीय सर्ग । ३



## चतुर्थसर्गः

नानामुन्याश्रम मार्गे पूत कृत्वा पदक्रमै ।
ददर्श चित्रकूटाद्रि चित्रकूटाभिमण्डितम् ।। १

नानाविधाश्च ये मुनयस्तेषां य आश्रमस्तम् । अत्र जातावेकवचनम् । पदक्रमै पादक्रमणै पूत पवित्र कृत्वा चित्रकूटार्द्रि ददर्श । किम्भूतम्—चित्राणि च तानि कूटानि शिखराणि तैरभि समन्तान्मण्डितामाभूषितम् । १

### अथ गीतं पञ्चदशम्

अथ रामो जानकी प्रत्याह । तदेवाशावरीरागेण रूपकतालेन चित्रकूटमित्यादिना गीतेन विवृणोति जयदेव —

चित्रकूटमवलोकय सीते ! ।
उन्नतशिखरलिखित-
घनमण्डलमङ्गलकरणविनीते !।। १ ध्रुवपदम्

हे सीते ! चित्रकूटम् अवलोकय पश्य । किंभूते सीते—उन्नतानि च तानि शिखराणि तेषु लिखिता इव ये घनमण्डला मेघमण्डला तेषा मङ्गलकरणे कल्याणकरणे विनीता दक्षा तत्सम्बुद्धौ हे उन्नतशिखरलिखितघमण्डलमङ्गलकरण विनीते । अनेन भवत्या एव दर्शनायामी मेघा शिखरेष्वारूढा अत एतान् सुस्वदृष्टिपातेन कृतार्थान्कुरु इति सूचितम् । 'श्व श्रेयस शिव भद्र कल्याण मङ्गल शुभम्' इत्यमर । १

मन्दाकिनीप्रवाहविलङ्घनचञ्चलपक्षमरालम् ।
विकसितकुन्दलवङ्गलतालवलीसरसीरुहमालम् ।। २

## चतुर्थसर्ग

किम्भूत चित्रकूटम्—मन्दाकिन्या य प्रवाहस्तस्य यद्विलङ्घनम् अतिक्रमण तेन चञ्चला पक्षा येषामेवविधा मराला हसा यत्र तम्। पुन किम्भूतम्—विकसिता प्रफुल्ला कुन्दलवङ्गलतालवलीसरसीरुहाणा माला पङ्क्तयो यत्र तम्। लवली लताविशेष । २

चम्पकभूर्जकदम्बतमालमुनिद्रुमभूषितभागम्।
वैरविहीनमतङ्गजसिहमयूरमहाविषनागम् ॥ ३

पुन किम्भूतम्—चम्पकभूर्जकदम्बतमालमुनिद्रुमैर्भूषिता भागा प्रदेशा यस्य तम्। भूर्जो भूर्जपत्राख्य । मुनिद्रुम अगस्त्य । पुन किम्भूतम्—वैरविहीना विगतवैरा मतङ्गजसिहमयूरमहाविषनागा यत्र तम्। ३

स्फटिकपद्मरागेन्द्रनीलमणिहीरकगैरिकशोभम्।
शीतलधीरसुगन्धसमीरणमृषिजनमानसलोभम् ॥ ४

पुन किम्भूतम्—स्फटिकपद्मरागेन्द्रनीलमणिहीरकगैरिकाणा शोभा यत्र तम्। पुन किम्भूतम्—शीतल धीरो मन्द सुगन्ध समीरण पवनो यत्र तम्। पुन किम्भूतम्—ऋषिजनमानसस्य लोभो यत्र तम्। ४

गवयशरभहरिणीहरिणादनकपिकुलविपुलविहारम्।
इन्धनदलफलकुसुमदर्भजलहेतुकमुनिसञ्चारम् ॥ ५

पुन किम्भूतम्—गवयशरभहरिणीहरिणादनकपीना यानि कुलानि तेषा विपुलो विहारो यत्र तम्। 'गुङ्—शब्दे' गवते इति गव गव यातीति गवय पशुविशेष । 'शरभस्तु पशोर्भेदे करभे वा' इति मेदिनी। हरिणी मृगी। हरिणादनो व्याघ्र । 'शार्दूलद्वीपिनौ व्याघ्रे तरक्षुस्तु मृगादन' इत्यमर । 'कपिप्लवङ्गप्लवगशाखा-मृगवलीमुखा' इत्यमर । पुन किम्भूतम्—इन्धनानि च दलानि तुलसीबिल्व-पत्रादीनि च फलानि च कुसुमानि च दर्भाश्च जलानि च हेतवो यस्य स इन्धनदलफलकुसुमदर्भजलहेतुक स मुनिसञ्चारो यत्र तम्। ५

शुकहारीतचकोरशारिकाखञ्जनकोकविरावम् ।
निर्झरझरणसलिलशीकरभरविगतविषमतरुदावम् ॥ ६

पुन किम्भूतम्—शुकहारीतचकोरशारिकाखञ्जनकोकाना विरावो यत्र तम् । 'शुको व्याससुते कीरे रावणस्य च मन्त्रिणि' इति हैम । चकोरशारिके प्रसिद्धे । 'खञ्जरीटस्तु खञ्जन ' इत्यमर । 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामक ' इत्यमर । 'आरवारावसरावविरावा ' इत्यमर । पुन किम्भूतम्—निर्झराणा प्रस्रवणाना यानि झरणानि तेषा यानि सलिलानि तेषा ये शीकरा कणा तेषा ये भरा समूहास्तैर्विगतो निवृत्त विषमस्तीव्रस्तरुदावो वृक्षाग्निर्यस्मात्तम् । 'दवदावौ वनारण्यवह्नी' इत्यमर । ६

गुहानिवासकिरातहूणखसविरचितविटपवितानम् ।
वनदेवीससतालसुसुररसश्रुतिकृतमङ्गलगानम् ॥ ७

पुन किम्भूतम्—गुहासु निवासो येषा ते च ये किरातहूणखसास्तैर्विरचितानि सञ्चारितानि विटपवितानानि वृक्षशाखाविस्तारा यत्र तम् । किरातादयो निषादजातीया । 'क्रतुविस्तारयोरस्त्री वितान त्रिषु तुच्छके' इत्यमर । पुन किम्भूतम् अस्य विष्णोरपत्यम् इ काम । 'षो ऽन्तकर्मणि' वनदेवीनाम् इ काम स्यति समापयति पूरयतीति तत् । अत्र 'नाम्नि च' इति डप्रत्यय । तालेन सह वर्त्तमान सतालम् । शोभनाश्च ते सुरा ब्रह्मेन्द्ररुद्रादय सुसुरास्तेषा रस श्रवणरुचिर्यत्र तत् सुसुररसम् । श्रुतौ कृतिन कुशला श्रुतिकृता मुनय । अत्र 'टाडका ' इति डप्रत्यय । मङ्गलाना मङ्गलविधायकऋचा गान मङ्गलगान श्रुतिकृताना मङ्गलगान श्रुतिकृतमङ्गलगानम् । वनदेवीस सताल सुसुररस श्रुतिकृतमगलगान यत्र तम् । यद्वा—'वनदेवीस सताल सुसुररस श्रुतिभिर्वेदै कृते मङ्गलगान यत्र तम् । कदाचन ससीतो राम इहागमिष्यतीति ज्ञात्वाऽग्रत एवाभ्येत्य मुनिव्याजा श्रुतयो मदागमनकाले 'स्वस्तिन ' इति । 'भद्रङ्कर्णेभि ' इत्यादि च मागलिकमृग्गान कुर्वन्तीति सूचितम् । ७

श्रीजयदेवमहाकविनिर्मितमद्भुतभूधरगीतम् ।
हरतु मल सकल पठतामनिश प्रकरोतु विनीतम् ।। ८

श्रीजयदेवमहाकविनिर्मितम् अद्भुतभूधरगीत पठता सकल मल हरतु च । पुन अनिश प्रकरोतु । किम्भूतमनिशम्--विनीतम् 'ई—गतौ' नि अतिशयेन ईयते गम्यते इति नीति विचित्रा नीतिर्गतिर्यस्मिन्निति तत् विनीतम् । न अन्यत् नितरा श यस्मादिति अनिशो मोक्षस्तम् । ८

इति गीत पञ्चदशम् ।

एकदा रघुपतिर्महागिरौ सीतया सह शिलातलेऽमले ।
निद्रितोऽभवदुदारविक्रम शक्रसूनुरगमन्खगाकृति ।। २

एकदा रघुपति महागिरौ चित्रकूटे अमले शिलातले सीतया सह यदा निद्रितोऽभवत् तदा शक्रसूनुरगमत् । किम्भूत शक्रसूनु —खगस्येवाकृतिर्यस्य स । २

विददार पदाङ्गुष्ठमैन्द्रि काकपरीक्षया ।
ईषिकास्त्रेण रामोऽक्षि काण चक्रे दुरात्मन ।। ३

इन्द्रस्यापत्यम् ऐन्द्रि शक्रसूनु सीताया पदाङ्गुष्ठ विददार । अत्र सीताया इति शेष । अत एव राम , दुष्ट आत्मा मनो यस्य तस्यैवविधस्यैन्द्रे 'ईक्ष-दर्शने'। परीक्ष्यतेऽनयेति परीक्षा काकस्य परीक्षा काकपरीक्षा, तया काकपरीक्षया काको-ऽयमिति बुद्धया ईषिकास्त्रेण अक्षि नेत्र काण चक्रे । अनेन श्रीमद्रामचन्द्रे-ऽतिदयावत्त्व सूचितम् । ३

शरभङ्गसुतीक्ष्णयोगिनौ कृपया वीक्ष्य रघूत्तम पुन ।
घटयोनिमुनेरनुज्ञया कृतवान्दण्डककानने स्थितिम् ।। ४

रघूत्तम श्रीराम । घटो योनिरुत्पत्तिस्थान यस्येति घटयोनिरगस्त्य स चासौ मुनिस्तस्यानुज्ञया दण्डककानने दण्डकनाम्नि वने स्थिति कृतवान् निवास चकार । किं कृत्वा—कृपया शरभङ्गसुतीक्ष्णयोगिनौ वीक्ष्य । ४

## अथ गीतं षोडशम् ।

अथ श्रीमद्रामचन्द्रस्य निवासप्रभावेण दण्डकस्य शोभातिशयत्व निरूप्यते दण्डकवनमित्यादिना गीतेन — गीतस्याशाऽवरीरागो रूपकताल —

दण्डकवनमतिचारु चकाशे ।
शारदेन्दुनिर्म्मलरुचिरघुपति-
यशसि जगति सविकाशे ।। १ ध्रुवपदम्

दण्डकवन चकाशे शुशुभे । किम्भूतम्—अतिचारु । 'काश्टृ—दीप्तौ' । कस्मिन्सति जगति रघुपतियशसि सविकाशे सति । किम्भूते शारदश्चासौ इन्दु तस्येव निर्मला रुक् यस्य तस्मिन् । १

निर्भयकुम्भजादिनानामुनिजनकृतसाधनयोगम् ।
विगतवैरमृगदस्युखगाऽऽदिबलाहकदाववियोगम् २ ।।

किम्भूत दण्डकवनम्—कृत सिद्ध साधनै नियसयमादिभि सह योगो येषा ते कृतसाधनयोगा निर्भयाश्च ये कुम्भजादिनानामुनिजनास्ते कृतसाधनयोगा यस्मिस्तत् । पुन किम्भूतम्-विगतवैरा मृगदस्युखगाऽऽदयो यस्मिस्तत् । दस्युश्चौर । अनेन श्रीमद्रामचन्द्रनिवासप्रभावातिशयत्व सूचितम् । पुन किम्भूतम्—बलाहकेन दावस्य दावाग्नेर्वियोग अयोगो यस्मिस्तत् । अनेन मेघ श्रीरामचन्द्र तत्र निवसन्त दृष्ट्वाय रावण हनिष्यति मा तत्परिचर्यातो विमोचयिष्यतीत्याशयेनास्य नित्यदा परिचर्या करोति स्मेति सूचितम् । 'अभ्र मेघो वारिवाहस्तनयित्नुर्बलाहक' इत्यमर । २

गोदातरलतरङ्गविचित्रितरुचिरकूलकृतशालम् ।
विहितनिवासविदेहसुतारघुनाथसुमित्राबालम् ।। ३

पुन किम्भूतम्—गोदाया गोदावर्या तरलाश्चञ्चलाश्च ये तरङ्गास्तैविचित्रित

रुचिर च यत्कूल तत्र कृता मुनिभिर्निर्मिता शाला पर्णगेहा यस्मिस्तत् । पुन किम्भूतम्–विहितनिवासा विदेहसुतारघुनाथसुमित्राबाला यस्मिस्तत् । ३

खण्डितकामसमाकुलशूर्पणखाश्रुतिकरणविनासम् ।
खरदूषणरजनीचरसहितसहस्रचतुर्दशनाशम् ।। ४

पुन किम्भूतम्–श्रूयत इति श्रुति श्रवण सा क्रियते याभ्या तौ श्रुतिकरणौ विशिष्टा चासौ नासा विनासा खण्डिता छिन्ना कामसमाकुलशूर्पणखाया । श्रुतिकरणाभ्या सह विनासा सुमहती नासिका यस्मिस्तत् । खरदूषणरजनीचराभ्या सहिताश्च ये सहस्रचतुर्दश तेषा नाशो यस्मिस्तत् । ४

रावणशासनकनकहरिणमारीचनिपातनिधानम् ।
सीताहरणविलापनगृध्रविलोकनसगतिदानम् ।। ५

पुन किम्भूतम्–नितरा पात शरीरनिपातो यस्मिन् स निपातो मृत्युर्मोक्षो वा तस्य यन्निधान निपातनिधाम् । रावणशासनेन कनकहरिणो यो मारीचस्तस्य निपातनिधान मृत्युभाण्ड मुक्तिभाण्ड वा । पुन किम्भूतम्–सीताया हरणे विलापने गृध्रस्य जटायो विलोकनसगतिदाने च यस्मिस्तत् । ५

योजनबाहुकबन्धमहासुरमारणपावकसगम् ।
नवधाभक्तिविवेकविचारणशबरीससृतिभगम् ।। ६

पुन किम्भूतम्—योजनबाहुकबन्धादयश्च ये महासुरास्तेषा मारण पावयन्तीति पावका देवास्तेषा सग समागमो यस्मितत् । पुन किम्भूतम्–नवधा या भक्तिस्तत्सहितो यो विवेको ज्ञान तस्य विचारण यस्यामेवविधा या शबरी तस्या ससृतिभगो यस्मिस्तत् । नवधा भक्तिर्यथा—'श्रवण दर्शन विष्णो स्मरण पादसेवनम् । अर्चन वन्दन दास्य सख्यमात्मनिवेदनम् । इति पुसार्ऽपिता विष्णोर्भक्तिश्चेन्नवलक्षणा । क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ।' इति ।

नारदमुनिदर्शनविधिसन्ततरुचिरकलध्वनिगीतम् ।
पम्पानिकटसमीरतनयसवादविशेषमभीतम् ॥ ७

पुन किम्भूतम्—नारदमुनिदर्शनविधौ सन्तता रुचिरा मनोज्ञा या कलास्ताभि सहितो ध्वनि प्रतिस्वनो यस्य एवम्भूत गीत यस्मिस्तत् । पुन किम्भूतम्—पम्पानिकटे समीरतनयेन सह य सवाद स विशेष ज्ञानोपदेशादिना विशिष्टो यस्मितत् । पुन किम्भूतम्—न काचिद्भीतिर्यस्मिस्तत् । अत्र 'टाडका' इति ड । ७

श्रीजयदेवकवेरुदित दण्डकवनचरितमनूपम् ।
यच्छतु मुक्तिपद विमद सुचिर रुचिर शुभरूपम् ॥ ८

श्रीजयदेवकवे उदित वचन दण्डकवनचरित शुभरूप यच्छतु ददातु । शोभतेऽसौ शुभ श्रीरामस्तस्य रूप शुभरूपम् । किम्भूतम्—मुक्तिपद मुक्तेर्धाम । पुन किम्भूतम्—विमद मदरहितम् । पुन किम्भूतम्—सुचिर बहुकालीनमनाद्यन्तमित्यर्थः । पुन किम्भूतम्—रुचिर मनोज्ञ तद्यथाऽस्ति तथा न किञ्चिदस्तीति भाव । पुन किम्भूतम्—अनूपम् अनुगता पश्चाद्गता न पुरोभवित्री उपा उपमा यस्य तत् अनूपम् । अत्र नामैकदेशग्रहणे नामग्रहण यथा—'भीमो भीमसेन' इति तद्वत् 'ब्म्य' इति निर्देशात् । ८

इति गीत षोडशम् ।

ऋष्यमूकमगमद्रघुवीरो लक्ष्मणेन सह मारुतजेन ।
तत्र सख्यमभवत्सुग्रीवे राघवस्य दृढमग्निसमेतम् ॥ ५

रघुवीर श्रीराम लक्ष्मणेन सह मारुतजेन ऋष्यमूकम् अगमत् अगच्छत् । तत्र राघवस्य सुग्रीवे अग्निसमेतमग्निसाक्षिक दृढ पुष्ट सख्यम् अभवत् मैत्री बभूव ।५

सप्ततालानय भित्त्वा वालिन वलशालिनम् ।
सुग्रीव भूपति चक्रे पूर्णानन्दो रघूत्तम ॥ ६

पूर्णानन्द रघूत्तम सप्ततालान् वृक्षविशेषान् तथा बलशालिन वालिन भित्त्वा सुग्रीव भूपतिं चक्रे । तथेति शेष । ६

## अथ गीतं सप्तदशम् ।

सुग्रीव स्वचित्त प्रति—

सुग्रीवस्स्वचित्त प्रत्याह । अत्राहेति शेष । इदेव रामकरीरागेण रूपकतालेन श्रीरामनामेत्यादिना गीतेन वर्ण्यते—

श्रीरामनाम मनोरम भजामृततत्त्वमयम् ।
न तनोति यत्स्मरणेन जन्मजराधिमरणभयम् ।।१ ध्रुवपदम्

हे चित्त ! मनोरम श्रीरामनाम भज । किम्भूत श्रीरामनाम—अमृतमक्षर च यत् तत्त्व परब्रह्म तन्मयम् । ननु कि तत् श्रीरामनाम तत्राह—यत्स्मरणेन जन्म च जरा च आधिश्च मरण च तानि तेभ्यो यद्भय तत् न तनोति न भवति । १

सुकृते पर प्रकृते पर सत्त्वादिभावगतम् ।
विश्राममेकमनोगिरामजशङ्कराभिमतम् ।। २

पुन किम्भूतम्—सुकृते पर सुकृतिरिष्टापूर्तादि तस्मात्पर तदुपरि वर्तमानम् । प्रकृते पर मायात परिभूतम् । पुन किम्भूतम्—सत्त्वादिभावगतम्, सत्त्वाना ब्रह्मादिस्तम्बपर्यन्तजीवानामादिभावो यस्मात्स सत्त्वादिभावो महाविष्णु तत्र गति प्रवृत्तिर्यस्य येनेति वा तत् । पुन किम्भूतम्—एकमनोगिराम् एकस्थमनोवचसा विश्राम विरतिस्थानम् । यत्र लग्ने वाङ्मनसे न पुनरिहावर्तेत इति भाव । पुन किम्भूतम्—अजश्च शङ्करश्च तयोरभिमत तयोरपीदमिष्टमन्त्रोऽस्तीति भाव । २

प्रह्लादनारदपुण्डरीकपराशरादिनुतम् ।
ससारसागरसुप्लव मन्त्राधिमन्त्रयुतम् ।। ३

पुन किम्भूतम्—प्रह्लादनारदपुण्डरीकपराशरादीना नुतिर्येन तत् । एतद्ग्रहणमात्रेणैवैषा स्तुतिरस्तीत्यर्थ । पुन किम्भूतम्—ससारसागरसुप्लवम् । पुन

किम्भूतम्—मन्त्राधिमन्त्रेण प्रणवेन युत मिश्रितम् । अस्यायमर्थ - भो चित्त ! अद्यत 'ॐ श्रीराम' एतदेवाक्षरचतुष्टय जप कदाचित्स्वप्नेऽप्यन्यन्नैवेति । ३

ननु योगाभ्यासादिना सर्वं भविष्यत्येव किमनेनेति चेत्तत्राह—

यदि भजसि हरिमपि केवलं हृदि कर्मणा वचसा ।
योगेन किं यज्ञेन किं ह्यपरेण किं तपसा ।। ४

भो चित्त ! हरति स्वभक्ताना दु खमिति हरि श्रीरामनाम त केवलमपि ॐशब्दश्रीशब्दरहितमपि वचसा कर्मणा वाग्रूपेणापि कर्मणा यदि हृदि भजसि तर्हि योगेन किम् यज्ञेन किम् अपरेण तपसा किम् । एतदेव सर्वसिद्धिकरमित्यर्थं । हीति निश्चये । तथा च हनुमान्—'कल्याणाना निधान कलिमलमथन पावन पावनाना, पाथेय यन्मुमुक्षोस्सपदि परपदप्राप्तये प्रस्थितस्य । विश्रामस्थानमेक कविवरवचसा जीवन सज्जनाना, बीज धर्मद्रुमस्य प्रभवतु भवता भूतये रामनाम ।' इति । ४

पुनस्तदेव विशिनष्टि—

उद्गीथरम्यपदक्रमोपनिषत्सुगीतपरम् ।
शबरीजटायुरजामिलादिकतापपापहरम् ।। ४

पुन किम्भूतम्—उत्कृष्टतया अगायीति उद्गीथ सामवेद रम्याश्च ये पदक्रमा वर्णितमस्ति तस्मात्परम् । तत्र तत्रैतदेव सर्वोत्कृष्टतयोक्तमित्यर्थं । पुन किम्भूतम्—शबरीजटायुरजामिलादिकाना तापपापहरम् । ५

रागादिदूरमशेषमुनिजनसेवित सततम् ।
लोकाभिराममभानमानसमञ्जसावितम् ।। ६

पुन किम्भूत श्रीरामनाम—रागादयो दूरे यस्मात्तत् । अतएव पुन किम्भूतम्—सतत निरन्तरम अशेषाश्च ये मुनिजनास्तै सेवितम् । पुन

किम्भूतम्-लोकाभिराम मुमुक्षुविषयिणामपि मनोमोहनम् । पुन किम्भूतम्—अमान निरभिमान मानस भक्ताना चित्त येन तत् । एतत्प्रभावादेव प्रह्लादादीना-महत्कृतिनिराकृतिरासीदित्यर्थं । पुन किम्भूतम्—अञ्जसा अनायासेनैव विततिर्यस्य तत् अञ्जसावितत्तम् । ईषदेव कथनेन विपुलीभविष्णु ।

ब्रह्माण्डसम्पुटरत्नमुज्ज्वलमकलमप्रलयम् ।
सर्वाश्रय सर्वातिग सर्वार्तिहृ च समम् ।। ७

पुन किम्भूतम्—ब्रह्माण्डसम्पुटरत्नम् ब्रह्माण्डे रत्नमेतदेव । पुन—किम्भूतम्—उज्ज्वलम् मलरहित निरञ्जनमित्यर्थं । पुन किम्भूतम्—नान्यत् कल मधुर यस्मात्तत् । यद्वा—कलयति भवविकारमिति कल नान्यत् कल भवविकारौषध यस्मात्तत् । पुन किम्भूतम्—ए श्रीवासुदेवे प्रलयो यस्मात्तदप्रलय श्रीरामचन्द्रे सायुज्यप्रदम् । पुन किम्भूतम्—सर्वाश्रय सर्वाधारम् । पुन किम्भूतम्—सर्वातिग सर्वमतिक्रम्य वर्तमानम् । पुन किम्भूतम्—सर्वार्तिहृ तापत्रयापहम् । पुन किम्भूतम्—समाना भक्ताभिलाषसदृशी स्वर्गापिवर्गादिफलरूपा मा लक्ष्मीर्यस्मात्तत् समम् ।७

तृष्णानिविडरजनीदिवाकरमसुरयूथमिदम् ।
जयदेवभाषितमद्भुत भवसारभूतमिदम् ।। ८

पुन किम्भूतम्—तृष्णा एव निविडा महान्धकारवती रजनी रात्रिस्तन्निवारणाय दिवाकर इव भवतीति तत् । पुन किम्भूतम्—असुरा इव ये कामक्रोधादयस्तेषा यूथ समूह भिनत्तीति तत् । अत्र 'मूलविभुजादे' इति कप्रत्यय । जयदेवभाषितम् अद्भुतम् इव गीत भवसारभूनम् अस्ति। ८

इति गीत सप्तदशम् ।

सुग्रीव कपिनिवहान्महीध्रतुल्यान्,
स्वर्णाभान्यखिलदिशासु ससर्ज ।
सीतायै लवणपयोधिमेत्य सर्वे,
वित्रेसुस्तरलतरगमाकलय्य ।। ७

सुग्रीव सीतायै सीताया अन्वेषण कर्तु न्यखिलदिशासु स्वर्णाभान् महीध्र-तुल्यान् पर्वताकारान् कपिनिवहान् वानरसमूहान् सससर्ज प्रेषयामास। ते सर्वे लवणपयोधिम् एत्य गत्वा तरलतरगम् आकलय्य दृष्ट्वा वित्रेसुर्बिभ्यु । तरल-तरगमित्यत्र जातावेकवचनम् ।७

जाम्बवद्वचनात्सद्यो गत्वा गिरिमनुत्तमम् ।
हनुमानब्धिमतरत्स्मृत्वा रामाङ्घ्रिपकजम् ।।८

हनुमान् जाम्बवद्वचनात्सद्य अनुत्तम सुन्दर गिरिं गत्वा रामाङ्घ्रिपकज स्मृत्वा अब्धिम् अतरत्ततार । ८

## अथ गीतमष्टादशम्

अथ सिन्धूत्तरणादनु यदासीत्तदाह—देशाख्यरागेण रूपकतालेन लङ्कापुर-मित्यादिना गीतेन—

लङ्कापुरमवलोक्य करालम् ।
नानाभटपरिपूरितशालम्,
स्मृत्य विभु वातसुतो,
न चकार भयम् ।। १ ध्रुवपदम्

वातसुतो हनुमान् विभु श्रीरामचन्द्र स्मृत्य लङ्कापुरम् अवलोक्य भय न चकार न भीतवान् । किम्भूत लङ्कापुरम्—कराल भीषणम । तदेव विशिनष्टि—पुन किम्भूतम्—नानाभटै परिपूरिता शाला यस्य तम् ।

बहुविधलोहयन्त्रशृगवाणम् ।
दौवारिकधृतपाणिकृपाणम् ।। २

पुन किम्भूतम्—बहुविधा नानाप्रकारा लोहयन्त्रशृगबाणा यस्य तत् । शृङ्खलानिधेयलोहनिर्मितयन्त्रविशेषाणि लोहयन्त्राणि 'शृखलाया शृग प्रोक्त माला वैजन्तिका तथा' इति वैजयन्ती । 'बाण' प्रहरणे प्रोक्तो बाण स्यादुपरो-

धके। दैत्यभेदे च बाण स्याद्बाण शब्दमयेऽपि च।' इति विश्व । पुन किम्भूतम्—धृता पाणौ कृपाणा, द्वारे नियुक्ता दौवारिका, ते धृतपाणिकृपाणा यस्मिस्तत्। 'असि कृपाण स्यात्खङ्गो निस्त्रिंश करवालक' इति कोशात्। २

रुचिरनिकेतनतोरणमालम्।
भ्राजमानमणिविरचितजालम्॥ ३

पुन किम्भूतम्—रुचिरा मनोहरा निकेतनतोरणमाला गेहद्वारपक्तयो यस्मिस्तत्। 'तोरणोऽस्त्री बहिर्द्वार पुरद्वार तु गोपुरम्' इत्यमर । पुन किम्भूतम्—भ्राजमाना देदीप्यमाना ये मणयस्तैर्विरचितानि जालानि गवाक्षा यस्मिस्तत्। ३

शुभसोपानवापिकारम्यम्।
सुरतरुभूषितविपिनमगम्यम्॥ ४

पुन किम्भूतम्—शुभा सोपाना यस्यामेवविधा या वापिकास्ता रम्या क्रीडनार्हा यस्मिस्तत्। पुन किम्भूतम्—सुरतरुभूषितविपिनम्। पुन किम्भूतम्—अगम्य शत्रुभिर्गन्तुमशक्यम्। ४

सन्ततमसुरनिकरसञ्चारम्।
कीलितलोकपालसुरदारम्॥ ५

पुन किम्भूतम्—सन्तत निरन्तरम् असुरनिकराणा सञ्चारो यस्मिस्तत्। पुन किम्भूतम्—कीलिता बन्धनागारेषु रुद्धा लोकपालादयो ये सुरास्तेषा दारा यस्मिन् तत्। ५

तुङ्गकनकमयसौधविकाशम्।
मयनिर्मितमगपतिसङ्काशम्॥ ६

चतुर्थसर्ग

भङ्क्त्वाऽशेषतरून्निहत्य बहुशो रक्षोगणास्तत्पुरी,
दग्ध्वाऽदाय मणि रघूत्तममगाद्वीरो हनूमान्कपि ॥ ६



इति श्रीरामगीतगोविन्दे महाकाव्ये
जयदेवकृतौ लङ्काप्रवेशो
नाम चतुर्थ सर्ग ॥ ४



क्षणमय परमानन्दमय वीर हनूमान् कपि रघूत्तममगादगच्छत् । किं कृत्वा क्षीरपयोनिधिं तीर्त्वा । पुन कि कृत्वा–श्रिय सन्निधौ गत्वा । पुन कि कृत्वा—राघवमुद्रिका दत्त्वा । पुन किं कृत्वा—अपगता शुक् यया साऽपशुक् तामपशुच कोऽर्थ शोकोत्सादनी वार्ता कृत्वा । पुन कि कृत्वा—अटवीमशोकवनिकां प्रविश्याशेषतरून् भङ्क्त्वा बहुशो रक्षोगणान्निहत्य । पुन कि कृत्वा—तत्पुरी दग्ध्वा । ६

इति श्रीमद्रामगीतगोविन्दार्थविवर्णने चतुर्थ सर्ग । ४



# पञ्चमसर्गः

प्रणनाम मुहुर्मुहु कपि करुणागारमपारविक्रम ।
रघुनाथमनाथवत्सल कथयमास महीसुतादशाम् ।। १

अपारविक्रम कपि हनुमान् करुणागार दयानिधिम् अनाथवत्सल रघुनाथ मुहुर्मुहु प्रणनाम महीसुतादशा कथयामास ।१

## अथ गीतमेकोनविंशम्

अथ हनुमान देशरागेण रूपकतालेन रजनीचरेत्यादिना गीतेन राम प्रत्याह—

रजनीचररमणीपरिवीता ।
बालचन्द्रकलिकेव सभीता ।।
नाथ ! हरे ! सीदति सीताऽशोकवने ।। १ ध्रुवपदम्

नाथ ! हे भगवन् ! हे हरे ! भक्तार्तिहन् ! सीता अशोकवने सीदति महान्त कष्ट-भोग कुरुते । यत किम्भूता सीता—रजनीचररमणीपरिवीता रक्षोयोषित्परिवृता । कीदृशी केव—भीत्या सह वर्तमाना सभीता सती राहुग्रसनभयाऽऽकुला बालचन्द्र-कलिकेव द्वितीयोदितचन्द्रकलेव । कलेव कलिका । अत्राभूतोपमाऽलङ्कारोऽस्ति ।१

ननु सा यदीमा दशामापन्ना तर्हि कुतस्त्व नानीतवानसीति चेत्तत्राह—

कृशशरीरगतिरतिशयदीना ।
भूमिशयाशनसलिलविहीना ।। २

किम्भूता सीता—कृशे शरीरगती यस्या सा । पुन किम्भूता—अतिशयदीना अतिमूर्च्छापन्ना । अत एव भूमिशया भूमौ शयाना । पुन किम्भूता—अशन-सलिलविहीना । २

ननु र्ताहि कथ जीवतीति चेत्तत्राह—

ध्यायति तव मुखचन्द्रमुदारम् ।
त्यजति भुजगमिव मणिमयहारम् ।। ३

तव मुखचन्द्र ध्यायति । किम्भूत मुखचन्द्रम्—उदार वदान्य स्वभक्तान्मरणादेर्भयान्मोचयानमिति भाव । किञ्च—मणिमयहार त्यजति मन्दोदर्यादिरक्षोरमणीदत्तहारादिक हस्तेनाऽपि न स्पृशति । कमिव —भुजगमिव । अनेन स्वस्यानुनयनाय रक्षोरमणीदत्तवस्तुनि तस्या यदीदृश्यनास्थाऽस्ति र्ताहि तेषु तद्दत्तवस्तुषु च कीदृश्यनास्थाऽस्तीति न ज्ञायत इति सूचितम् । ३

भजति निशेषकिरणमिव जालम् ।
स्पृशति करेण मुहुर्निजभालम् ।। ४

निर्गमनाशक्यत्वात् जालमिव मत्स्यमारणवस्त्रमिव भवतीति जाल रक्षोरमणीसमूह भजति सेवते । किमिव—निशेषकिरणमिव मत्स्यविशेषमिव । 'किरणप्रग्रहौ रश्मी विक्षेपे मत्स्यभेदके' इति हलायुध । किञ्च—करेण मुहुर्निजभाल स्पृशति मद्भाग्यमीदृग्विधमेवेति स्मृत्वा निश्वसितीत्यर्थ । ४

कलयति शरमिव मलयसमीरम् ।
मुञ्चति तप्तविलोचननीरम् ।। ५

किञ्च—मलयसमीर शरमिव कलयति मन्यते । किञ्च—तप्तविलोचननीर तप्तदु खाश्रुजल मुञ्चति । ५

विरहतया विदधाति न हासम् ।
जनयति वह्निविषमनिश्वासम् ।। ६

किञ्च—विरहतया हास न विदधाति । अन्यच्च किम्—वह्नेरपि विषम अग्नेरप्यसह्य स चासौ निश्वासस्त जनयति त्यजतीत्यर्थ । ६

सा तु स्वकीयनिश्वासाग्निज्वालयैव तद्व्यापादने समर्थाऽस्ति तथाऽपि त्वयैव त रावण व्यापादयितुकामा त्वदाख्यामन्त्रप्रयोग प्रकुर्वाणास्तीत्याह—

रामरामरामेति सकामम् ।
वदति विलापतया वसुयामम् ॥ ७

सकाम ससङ्कल्प यथा स्यात्तथा वसुयाममहर्निश यथा स्यात्तथा विशिष्टाश्चासौ लापो विलाप शास्त्रवचन तस्य भावो विलापता तया विलापतया शास्त्रोक्ततया । यद्वा—विलापतया प्रलापतया अत्युच्चतरशब्देन वा रामरामरामेति वदति । अत्र त्रिरुच्चारणेन किमनुमीयते मनसा तव स्मरण कृत्वा हस्ताभ्या च तव प्रतिकृतिं कृत्वा वचसा राम एतदेवाक्षरद्वय जपतीति । ७

श्रीजयदेवकवेरिदमुदितम् ।
सुखयतु रामभक्तमतिमुदितम् ॥ ८

श्रीजयदेवकवे उदितम् एवम्भूतम् इद गीत रामभक्त सुखयतु । किम्भूत गीतम्—अतिशयेन मुत् अतिमुत् अतिमुद इति प्राप्तिर्यस्मात्तत् । 'इण्–गतौ ।' धातो क्ति । समासे ड । ८

इति गीतमेकोनविशम् ।

पद्माष्टादशसख्यया धृतरया पाथोधिगम्भीरया,
वर्षाकालिककालिकानिबिडया शाखामृगीसेनया ।
सवीतो रघुनन्दनो जलनिधेस्तीर तरङ्गाकुल,
गत्वा सेतुमथो चकार रुचिर पश्चाद् भवस्थापनम् ॥ २

अथो शाखामृगीसेनया सवीत परिवृत रघुनन्दन जलनिधेस्तीर गत्वा रुचिर सेतु चकार । किम्भूतया सेनया—पद्माष्टादशसख्यया । पुन किम्भूतया—धृत र रहो यया तथा धृतरया धृतवेगया । यद्वा—धृता रा वीरलक्ष्मीर्यया तया । 'र सूर्येऽग्नौ धने कामे र जले रङ्गवेगयो । रा रमा रमणी बाला र तीक्ष्णे कर्कशे दृढे' इति । पुन. किम्भूतया—पाथोधिगम्भीरया । पुन

किम्भूतया–वर्षाकालिका या कालिका मेघमाला तस्या अपि निबिडया। पश्चात्तदनुभवस्थापन चकार। २

## अथ गीतं विंशम्।

लक्ष्मण. राम प्रति—

अत्र वाक्ये क्रियापदानुषङ्गोऽस्ति।

अथ लक्ष्मणोदितमेव गुर्जरीरागेण रूपकतालेन पश्य पश्येत्यादिना गीतेनानुवर्ण्यते—

पश्य पश्य रघुवर! वरसेतुम्।
परमदुरासदरूपपयोनिधि-
सलिलविलघनहेतुम्॥ १ ध्रुवपदम्

हे रघुवर! वरसेतु पश्य पश्य। किम्भूत वरसेतुम्—परमदुरासदरूपो य पयोनिधिस्तस्य यत्सलिल तद्विलघनमेव हेतु कारण यस्य तम्। १

शैलनिवहमानीय सुमनमिव शतयोजनपरिमाणम्।
नानाऽऽकारशरीरवलीमुखवीरविहितनिर्माणम्॥ २

पुन किम्भूतम्–नानाऽऽकाराणि शरीराणि येषामेवविधा ये वलीमुखवीरा वानरवीरास्तैर्विहित निर्माण यस्य तम्। कि कृत्वा–शैलनिवह पर्वतसमूहम् आनीय आ समन्तात् नीत्वा। कमिव–सुमनमिव। स्वकार्यसिद्धये सत्पुरुषमिव सुष्ठु मनो यस्य तम्। अत्र डप्रत्यय। यद्वा– प्रवालादिभ्य सुष्ठु मन्यत इति सुमन पुष्प तदिव। 'मन–ज्ञाने' अत्र घञर्थे कप्रत्यय। पुन किम्भूतम्–शतयोजनानि परिमाण यस्य तम्। २

वालितनयसुग्रीववायुसुतनलनीलादिविचारम्।
शङ्खभुजगतिमिमकरचक्रकुलसङ्कुलमतिविस्तारम्॥ ३

पुन किम्भूतम्—वालितनयसुग्रीववायुसुतनीलादीना विचार सञ्चारो यस्मिस्तम् । पुन किम्भूतम्—शङ्खभुजगतिमिमकरचक्रकुलै सङ्कुल सङ्कीर्णम् । पुन किम्भूतम्—विस्तार दृग्विस्तारम् अतिक्रम्य भवतीति तम् । यावानस्ति तावान्द्रष्टुमशक्यम् । ३

अञ्जननीलनीरधिमध्यगमुज्ज्वलफेनविकारम् ।
छायापथमिव गगन्समुद्यतमुडुगणमिलितमुदारम् ।। ४

पुन किम्भूतम्—अञ्जननीलो यो नीरनिधि समुद्रस्तस्य मध्यगस्तम । पुन किम्भूतम्—उज्ज्वलश्चासौ फेनस्तस्य विकारो यस्मिस्तम् । कमिव—छायापथमिव तारामार्गमिव । किम्भूत छायापथम्— गगनसमुद्यत खे प्रकाशमानम् । उडुगणास्तारासमूहा मिलिता सश्लिष्टा यस्मिस्तम । पुन किम्भूत सेतुम्—उदार ततोप्यतिशोभमानम् । रघुवशे यथा—'वैदेहि ! पश्यामलयाद्विभक्त मत्सेतुना फेनिलमम्बुराशिम् । छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम् ।' ४

ऋक्षभल्लबहुराजिविराजिविराजितमिन्दुकिरणसमरूपम् ।
लङ्काविजयपत्रमर्पितमिव विधिना विपुलमनूपम् ।। ५

पुन किम्भूतम्—ऋक्षभल्लबहुराजिविराजितम् 'ऋक्षाच्छभल्लभल्लूका' इत्यमर । 'ऋक्ष—हिंसायाम् ।' ऋक्षतीति ऋक्ष 'पचादेर' । पुन किम्भूतम्—इन्दुकिरणसमरूपम् । कमिव—विधिना ब्रह्मणा अर्पित विपुलमनूप लङ्काविजयपत्रमिव । ५

सिद्धयक्षविद्याधरकिन्नरसुरवरलोचनलोभम् ।
यातुधानरमणीजनलोचनरोदनमभिगतशोभम् ।। ६

पुन किम्भूत सेतुम्—सिद्धाश्च यक्षाश्च विद्याधराश्च सुरवश्च ते तेषा यानि लोचनानि तेषा लोभो नितरा सादराऽवलोको यत्र तम् । सुरवरा इन्द्रादय । पुन किम्भूतम् यातुधाना राक्षसास्तेषा या रमण्य प्रियतमास्तासा लोचनानि रोदयतीति

तम् । पुन किम्भूतम्—अभिगतशोभम् अभिगता त्वामभिप्राप्ता शोभा यातुधान-श्रीर्यत्र तम् । ६

वालखिल्यवैखानसफेनपवनचरमुनिकृतजापम् ।
राजमानराकेयदूरकृतदारुणवन्धनपापम् ।। ७

पुन किम्भूतम्—वालखिल्याश्च वैखानसाश्च फेनपाश्च ते तदादयश्च ये वनचरा मुनयस्तै कृत जाप शिवशिवेति जपो यत्र यम् । नवे नवे लब्धे पूर्वसञ्चितत्यागिनो वालखिल्या । अकृष्टपच्यवृत्तयो वैखानसा । स्वयपतित-फलादिभिर्जीवन्त फेनपा । पुन किम्भूतम्—राजमान राकेयश्चन्द्रो यस्मिन्स राजमानराकेय शिव तेन दूर एव कृतानि विहिसितानि दारुणानि बन्धनादीनि पापानि यस्मात्तम् । बध्नन्तीति बन्धनानि रजस्तमस्सत्त्वानि तानि आदीनि कारणानि येषा तानि बन्धनादीनि । 'कृञ्—हिसायाम् ।' राकाया अय पति राकेय । 'कलाहीने सानुमति पूर्णे राका निशाकरे' इत्यमर । ७

पठति जन सुचिर सुमतिर्जयदेवविनिर्मितगीतम् ।
पश्यति नैव कदाचिदपि प्रतिबन्धकससृतिभीतम् ।। ८

य जन सुचिर भुक्तिमुक्तिद जयदेवविनिर्मितगीत पठति स प्रतिबध्नन्तीति प्रतिबन्धका गुणास्तत्कृता या ससृति तस्या भीत यस्मात्स प्रतिबन्धससृतिभीतो यमस्त कदाचिदपि न पश्यति । किम्भूतो जन—सुमति सुबुद्धि । शोभना चासौ चि सुचि सुबुद्धि ता राति ददातीति सुचिर भुक्तिदम् । शक्तिमत्त्वात् । यद्वा—शोभन च तत् चि सुचि ज्ञान तत् राबीति सुचिर मुक्तिदम् । 'ऋते ज्ञानान्न मुक्ति' इति निर्देशात् । 'च पुसि चेतने चन्द्रे चौरे होच्चारदर्शने । इदन्तश्च स्त्रिया बुद्धौ ज्ञाने चारे च पावके' । ८

इति गीत विशम ।

तीर्त्वा पाथोनिधि राम ससैन्य प्रतिभापित ।
उल्लङ्घ्य लङ्कामगमत्सुवेलमगसत्तमम् ।। ३

राम पाथोनिधि तीर्त्वा, लङ्काम् उल्लङ्घ्य अगसत्तम सुवेलमगमत् । किम्भूतो राम –ससैन्य । पुन किम्भूत –प्रतिभाषित सुवेल व्रजेति केनचिन्मन्त्रिजनेन कथित । ३

लङ्का रुरोध वलिभि कपिभि प्रभावी,
रामोऽरविन्दनयनो रविवशकेतु ।
युद्ध बभूव तुमुल हरिराक्षसाना,
शस्त्रास्त्रमुद्गरगिरिक्षितिजप्रहारम् ॥ ४

प्रभावी प्रतिपन्नप्रभाव अरविन्दनयन पद्मनेत्र रविवशकेतु सूर्यवशप्रकाशको राम बलिभि कपिभिर्लङ्का रुरोध। तदा हरिराक्षसाना तुमुल सङ्कुल युद्ध बभूव । किम्भूत युद्धम्–शस्त्राणि च अस्त्राणि च मुद्गराश्च गिरयश्च क्षितिजाश्च तेषा प्रहार प्रक्षेपो यत्र तत् । 'शसु—हिसायाम् ।' शस्येतेऽनेनेति शस्त्र खड्गादिकम् । 'असु–क्षेपणे ।' अस्यते इत्यस्त्र बाणादिकम् । मुद्गरा अयोदण्डा ।४

## अथ गीतमेकविंशम्

शुक सारण प्रति—

अत्रोवाचेति शेष ।

स यद्रुवाच तदेवाऽऽशावरीरागेण रूपकतालेन लङ्कापतिरित्यादिना गीतेनोच्यते—

लङ्कापतिरालोकयदीशम् ।
इन्दीवरसमरुचिरविलोचन-
मरिमदमोचनकोशम् ॥ १ ध्रुवपदम्

लङ्कापति रावण ईश श्रीरामम् आलोकयत् अपश्यत् । किम्भूतमीशम्—इन्दीवरसमरुचिरे विलोचने यस्य तम् । पुन किम्भूतम्—अरिमदमोचना कीशा वानरा यस्य तम् । १

राकापतिशतकोटिमञ्जुमुखमनुपमचिबुकलसन्तम् ।
भृकुटीकुटिलविलासतयारतिनायकचापहसन्तम् ।। २

पुन किम्भूतम्—शतकोटिगुण मञ्जु शतकोटिमञ्जु राकापतेश्चन्द्रात् शतकोटि-मञ्जुमुख यस्य तम् । पुन किम्भूतम्—अनुपम च यत् चिबुक तेन लसन्तम् । 'अधस्तादधरोष्ठस्य चिबु स्याच्चिबुक तथा' इति निगम । पुन किम्भूतम्—भृकुटचो कुटिला या विलासता तया रतिनायकचाप कामबाण हसतीति तम् । २

करकोदण्डशरप्रभया लसमानसमस्तशरीरम् ।
शक्रसमर्पितवर्मभृत समराब्धिविलङ्घनधीरम् ।। ३

पुन किम्भूतम्—करयो वर्त्तमानौ यौ कोदण्डशरौ धनुर्बाणौ तयोर्या प्रभा प्रतिभा तया लसमान समस्त शरीर यस्य तम् । पुन किम्भूतम्—शक्रसमर्पितवर्म-भृतम् । पुन किम्भूतम्—समराब्धिविलङ्घनधीरम् । ३

बद्धजटामुकुट निबिड रजनीचरनाशनदक्षम् ।
चारुरथस्थमुदग्रपताकमखण्डितरोषविपक्षम् ।। ४

पुन किम्भूतम्—बद्धजटामुकुटम् । पुन किम्भूतम्—निबिड दृढम् । पुन किम्भू-तम्—रजनीचराणा रक्षसा यन्नाशन तत्र दक्ष प्रवीणम् । पुन किम्भूतम्—चारुरथस्थम् । उदग्रपताकम् । पुन किम्भूतम्—अखण्डित परिपूर्ण रोषो येषा ते अखण्डितरोषा राक्षसा तेषा विपक्ष शत्रुस्तम् । ४

कालनीयपशभ खलह कलह करदारुणमेतम् ।
मातलिसारथिसहितमत्तमहितलनबलेन समेतम् ।। ५

पुन किम्भूतम्—काल नयन्तीति कालन्य तानेव यान्ति युद्धायाभिमुखा भवन्तीति कालनीया वीराधिवीरा तेषापशा बाधनकर्त्री भा दीप्तिर्यस्य स तम्। 'पश—बाधने' 'पचादेर ।' पशति बाधत इति पशा। ननु निरपराधिनोऽपि वीरान्निहन्तीति चेत्तत्राह—खलहम्। अथ खलहन्तृत्वेऽपि विशिष्टतामाह—कलह करदारुणम्। पुन किम्भूतम्—एतम् आ समन्तादित प्राप्त एतस्तमेतम्। सर्वतो लङ्कामावृत्य तत्सर्वद्वार्षु युध्यन्तमित्यर्थ । पुन किम्भूतम्—मातलिर्य सारथि स सहित हितकारको यस्य तम्। पुन किम्भूतम्—मह्या तलन्ति तिष्ठन्तीति महीतला द्रुमा पर्वताश्च तै सह तानादाय नटन्ति युद्धकरणकामनाहर्षेण नृत्यन्तीति महितलना अत एव सत्ताश्च ये महितलना मत्तमहितलना हनूमदादिमहावीरास्तेषा बल यस्यैव विधो य सुग्रीवस्तेन समेतस्तम्। 'लल-प्रतिष्ठायाम्' 'पचादेर ।' 'नट—नर्त्तने' 'नान्निच ।' इति ड । ५

परिकरकटितूणीरविभूषितमुद्गरबाणकरालम् ।
आकम्पिततुलसीदलसङ्कुलकुसुमकलितवनमालम् ॥ ६

पुन किम्भूतम्—परिकरेण सहित य कटि स तूणीरेणेषुधिना विभूषितो यस्य तम्। पुन किम्भूतम्—उद्गरा उल्बणविषा ये बाणास्ते कराला भीषणा यस्य तम्। पुन किम्भूतम्–ईषत्कम्पिता तुलसीदलै सङ्कुला मिश्रिता कुसुमकलिता वनमाला यस्य तम्। ६

तिष्ठ विमूढमते ! समरे दशकण्ठमिति प्रवदन्तम् ।
प्रस्फुरिताधरपल्लवयुग्प्रविभासिमनोहरदन्तम् ॥ ७

पुन किम्भूतम्—हे मूढमते !। समरे तिष्ठेति दशकण्ठ प्रवदन्तम् । पुन किम्भूतम्—प्रस्फुरिताधरपल्लवयुगे प्रतिभासिनो मनोहरा दन्ता यस्य तम्। अत्र प्रशब्दप्राग्वर्तिनो युगशब्दोत्तरवर्तिनश्चाकारस्य गुरुता नाऽस्ति। तच्च वाणीभूषणे सोदाहरणमुक्तम्—'सयुक्तपूर्वोऽपि लघु. क्वचित्स्याद्वर्णस्तु ह्रप्रादिगतो विभाषा।' इति। अत्राऽपि ह्रशब्दादिगततुशब्दस्य लघुत्वमस्ति। ७

श्रीजयदेवभणितमतिमञ्जुलरघुवरसमरविधानम् ।
पठति समरजयमतिशयपुरजयमेति महाभयदानम् ॥ ८

श्रीजयदेवभणितम् अतिमञ्जुल रघुवरसमरविधान पठति स समरजयम् अतिशयपुरजय वैकुण्ठलोकाधिवासविजय च एति प्राप्नोति । किम्भूतमतिशयपुरजयम्—महाभयस्य मृत्यो दान खण्ड यत्र तम् । ८

इति गीतमेकविंशम् ।

जघान हीमान्गिरिशृङ्गसन्निभा-
न्महाबलान्मुद्गरशस्त्रयोधिन ।
दशास्यमुग्र घननादमुद्भट ।
घटश्रुति चैव तथैव राम ॥ ५

हीति पादपूरणे । राम इमान् जघान हतवान् । किम्भूतानिमान्—गिरिशृङ्गसन्निभान् गिरिसानूपमान् । पुन किम्भूतान्—महाबलान् । पुन किम्भूतान्—मुद्गरादीनि च यानि शस्त्राणि तैर्योद्धु शील येषा तान् । इमान्कानिति चेत्तत्राह—दशास्य रावणम् च पुन उग्रमिन्द्रजेतार मायायोधिन घननादमेव । उद्भट घटश्रुतिं कुम्भकर्णम । ५

जित्वा रिपु रघुवरो दशास्य देवकण्टकम् ।
चकाशे सुचिर तत्र शारदेन्दुरिव स्फुटम् ॥ ६

रघुवर सुचिर बहुकालिक देवकण्टक दशास्य रिपु जित्वा तत्र तस्या समरभूमौ स्फुट यथा स्यात्तथा चकाशे शुशुभे क इव शारदेन्दुरिव 'काशृ—दीप्तौ ।' ६

## अथ गीतं द्वाविंशम् ।

अथ हृष्टा देवा वसन्तरागेण रूपकतालेन जय रामचन्द्रेत्यादिना गीतेन रामचन्द्र स्तुवन्ति—

जय रामचन्द्र ! मायाऽतिदूर !।
रविवशविभूषण ! मुकुटशूर ! ।। १ ध्रुवपदम्

हे रामचन्द्र ! हे मायाऽतिदूर ! जय स्वीयोत्कर्षमाविष्कुरु निर्विकारस्वरूपेणास्मन्नेत्रगोचरो भवेत्यर्थं । किम्भूत—रविवश विभूषयतीति तत्सम्बुद्धौ । पुन किम्भूत शूराणा मध्ये मुकुट शिरोमणिस्तत्सम्बुद्धौ । १

ब्रह्मामहेन्द्रगन्धर्वगीत ! ।
कल्याणनिपुण ! गुणगणविनीत ! ।। २

पुन किम्भूत—ब्रह्मा च अ शिवश्च महेन्द्रश्च गन्धर्वाश्च तैर्गीतस्तत्सम्बुद्धौ । 'अ शिवे केशवे वायौ' इत्यक्षरमालिकायाम् । पुन किम्भूत—कल्याणे कर्मणि निपुणस्तत्सम्बुद्धौ । पुन किम्भूत—गुणगणा विनीता विशिष्टा यत्र तत्सम्बुद्धौ । २

चण्डप्रयात ! खण्डितविराध ! ।
स्वर्गापवर्गद ! सरदगाध ! ।। ३

पुन किम्भूत—चण्ड प्रयात दिग्विजयनिमित्त गमन यस्य तत्सम्बुद्धौ । पुन किम्भूत—खण्डित शकलीकृत विराधो येन तत्सम्बुद्धौ । पुन किम्भूत—स्वर्गापवर्गद शत्रूणामपि भुक्तिमुक्तिद । पुन किम्भूत—सरन्तीति सरद शत्रवस्तेषामगाधोऽगम्यस्तत्सम्बुद्धौ । 'सृ—गतौ' । ३

पुनस्तदेव विशिनष्टि—

करुणानिकेततम ! प्रबलरोष ! ।
भावाधिगम्य ! जितसकलदोष ! ।। ४

प्रकर्षेण करुणानिकेतस्तत्सम्बुद्धौ । पुन किम्भूत—प्रबल रोषो यस्य तत्सम्बुद्धौ । तत्सत्वे कारणमाह—भावेन अधिगम्य भावाधिगम्यस्तत्सम्बुद्धौ हे

भावाधिगम्य ! हे यथाभाव ! । तथासत्त्वेऽप्यथ वैचित्र्य दर्शयति—जिता सकला दोषा येन तत्सम्बुद्धौ । ४

धाराधरप्रतिम ! नीलदेह ! ।
सद्रूपबोधमयमोदगेह ! ।। ५

पुन किम्भूत—धाराधरेण मेघेन प्रतिम सदृशस्तत्सम्बुद्धौ । मेघो यथा सर्वत्र जले स्थलेऽपि च वर्षति तथा त्वमपि सर्वेषु जनेषु कामवर्षोऽसीत्यर्थ । पुन किम्भूत—नील देहो यस्य तत्सम्बुद्धौ । पुन, किम्भूत—सद्रूपबोधमय ब्रह्मज्ञानात्मको यो मोद आनन्दस्तस्य गेहो वासस्थान तत्सम्बुद्धौ । ५

व्यालादपत्र ! शतपत्रनेत्र ! ।
कूटस्थ ! पाणितलकलितवेत्र ! ।। ६

पुन किम्भूत—व्यालान्सर्पानत्तीति व्यालादो गरुड स पत्र वाहन यस्य तत्सम्बुद्धौ । पुन किम्भूत—शतपत्रनेत्र । पुन किम्भूत—कूटस्थ अन्तर्गतोऽपि सन् विकारेभ्यो बहिर्भूत । पुन किम्भूत—पाणितले कलित वेत्र येन तत्सम्बुद्धौ । ६

सीतापतिरघुपतिजैनरुद्ध ! ।
विशसितसमस्तमायाविरुद्ध ! ।। ७

जैन नास्तिक यन्मत तत् रुद्ध निराकृत येन स जैनरुद्धस्तत्सम्बुद्धौ । अत्र शाकपार्थिवादीनामिति मध्यमपदलोप । सीतापति रघुपतिर्योऽसौ जैनरुद्धस्तत्सम्बुद्धौ । पुन किम्भूत—विशसिता समस्ता मायोद्भवा विरुद्धा येन स तत्सम्बुद्धौ । 'शसु—हिंसायाम्' । ७

अथ कविर्गीतान्ते स्वनामनिबध्नन् प्रार्थयते—

जयदेवविनिर्मितमेव राम ! ।
कुरु तेन नाथ ! मम हृदयधाम ! ।। ८

हे राम ! एव कोऽर्थं स्वभक्ताना हृदि रमतेऽसौ राम इति त्वन्नामार्थनिश्चय कृत्वा एतत् जयदेवविनिर्मितमस्ति तेनानेन मद्विनिर्मितगीतेन मम हृदय धाम कुरु ममान्त करणे स्थान विधेहि मन्निश्चय सफलीकुरु । उक्त च—'मन्त्रे तीर्थे द्विजे देवे भैषज्ये भिषजे गुरौ । यादृशी भावना यस्य सिद्धिर्भवति तादृशी' । ८

इति गीत द्वाविशम् ।

इति रामस्तव कृत्वा हर्षनिर्भरमानसा ।
देवा नभसि यानस्था ववृषु कौसुम चयम् ।। ७

इति रामस्तव कृत्वा नभसि यानस्था देवा कौसुम चय ववृषु पुष्पवर्ष चक्रु किम्भूता देवा —हर्षनिर्भरमानसा । ७

कृत्वा विभीपणमशेषनिशाचरेश,
लङ्कापुरेऽसुरभटैरुपशोभमाने ।
अग्नौ विशुद्धधरणीतनयासमेतोऽ-
योध्या ययौ रघुपति किल पुष्पकेण ।। ८



इति श्रीमद्रामगीतगोविन्दे महाकाव्ये
श्रीजयदेवकृतौ लङ्काविजयो
नाम पञ्चम सर्ग ।। ५



## पञ्चमसर्ग

रघुपति किन्न असुरभटै उपशोभमाने लङ्कापुरे विभीषण रावणानुजम् अशेषनिशाचरेश कृत्वा पुष्पकेण पुष्पकाख्येन विमानेन अयोध्या स्वा पुरी ययो जगाम। किम्भूतो राम—अग्नौ विशुद्धा या धरणीतनया तया समेत सयुत । ८

इति श्रीमद्रामगीतगोविन्दार्थविवणने पञ्चम सर्ग । ५



# षष्ठसर्गः

ददर्श कानन भूध्र गङ्गा नाशितकल्मषाम् ।
भरद्वाज विलोक्याऽथ प्राप साकेतक हरि ।। १

हरि श्रीराम कानन दण्डकारण्य भूध्र विन्ध्याद्रिगिरिसमूह नाशितकल्मषा दूरीकृतदुरितविपाका गङ्गा भरद्वाजम् ऋषिवर ददर्शापश्यत् । विलोक्य दृष्ट्वा अथ साकेतमयोध्या प्राप प्राप्तवानित्यर्थ । अत्राथ ददर्शेति द्वयो सर्वत्रान्वयोऽस्ति । १

## अथ गीत त्रयोविंशम् ।

पौराः—

अत्र राम दृष्ट्वोचुरित्यध्याहार्यम् ।

अथ पौरोक्तमेव गुर्जरीरागेण रूपकतालेन पश्यतेत्यादिना गीतेन विवृणोति जयदेव —

पश्यत रामचन्द्रमतिशोभम् ।
विधिहरिहरदिननाथनाक-
पतिमुनिगणमानसलोभम् । १ ध्रुवपदम्

भो जना ! अतिशोभ रामचन्द्र पश्यतालोकयत । किम्भूत रामचन्द्रम्— विधिश्च हरिश्च हरश्च दिननाथश्च नाकपतिश्च मुनिगणाश्च ते तेषा यन्मानस चित्त तस्य लोभो यत्र तम् । १

नीलशकलसन्निभशरीररुचिशुक्तिसुविद्रुमहारम् ।
वामभागसीताशुभशोभितमनुगतहरिपरिवारम् ।।

पुन किम्भूतम्—शुक्ते सुविद्रुमास्तेषा हारो यस्य स । नीलस्य शकल खण्ड नीलशकल तत्सन्निभा शरीरस्य रुचि कान्तिर्यस्य स । नीलस्य शकल

खण्ड नीलशकल तत्सन्निभा शरीरस्य रुचि कान्तिर्यस्य स । नीलशकलसन्निभ-शरीररुचिश्चासो शुक्तिसुविद्रुमहारस्तम् । 'विद्रुमो वृक्षभेदे स्याच्छुक्तिजे सजलेऽपि च' इति विश्व । शुभा कल्याणदा चासौ शोभा शुभशोभा सीताया शुभशोभा सीताशुभशोभा सा सञ्जाता अस्मिन्निति सीताशुभशोभित वामभाग सीताशुभ-शोभितो वामभागो यस्य तम् । पुन किम्भूतम्–अनुगत हरिपरिवारो वानरसमूहो यस्य तम् । २

भानुसमानपुष्परथसगतमनुजमहितमसुरघ्नम् ।
चण्डविशिखकोदण्डविनाशितसकलचराचरविघ्नम् ।। ३

पुन किम्भूतम्–भानुसमानो योऽसौ पुष्परथ पुष्पकाख्य विमान तत्र सगतम् उपविष्टम् । पुन किम्भूतम्–अनुजसहितम् । पुन किम्भूतम्–असुरघ्नम् । पुन किम्भूतम्—चण्डविशिखकोदण्डाभ्या विनाशितानि अखिलानि समग्राणि चराचर-विघ्नानि येन तम् । ३

भरताऽऽलिङ्गनगुरुपादाम्बुजप्रणतिविकम्पितभालम् ।
द्विजनतिकरणविधानपरस्परपृच्छ चलवनमालम् ।। ४

पुन किम्भूतम्—भरताऽऽलिङ्गने गुरुपादाम्बुजप्रणतौ विकम्पित भाल यस्य तम् । पुन किम्भूतम्–द्विजनतिकरणविधाने परस्पर पृच्छा यस्य तम् । 'प्रश्नोऽनु-योग पृच्छा च' इत्यमर । पुन किम्भूतम्—चला वनमाला यस्य तम् । 'आपाद-लम्बिनी माला वनमालेति गीयते' इत्यभिधानचिन्तामणि । ४

मातृभवनकृतगमनमनिन्दितमणिमयपीठनिवासम् ।
चामरयुगलसितातपवारणमण्डितमञ्जुलहासम् ।। ५

पुन किम्भूतम्—मातृभवने कृत गमन येन तम् । पुन किम्भूतम्—अनि-न्दितमणिमयपीठे निवास उपवेशो यस्य तम् । पुन किम्भूतम्— चामरयुगल-सितातपवारणाभ्या मण्डित मञ्जुल मनोहर हासो यस्य तम् । ५

हसदुकूलपुञ्जमुकुटप्रभया प्रतिभासिकपोलम् ।
निजजनमुपरिकृपामयशुभ्रकटाक्षनिवेशनलोलम् ॥ ६

पुन. किम्भूतम्—हसवच्च यद्दुकूल हसदुकूलम्, मुकुटप्रभाया पुञ्ज पुञ्ज-मुकुटप्रभा हसदुकूलेन पुञ्जमुकुटप्रभया च प्रतिभासि प्रतिबिम्बित कपोल यस्य तम्। निजजनम् उपरि स्वकीयजनस्योपरिष्टात् कृपामयशुभ्रकटाक्षाणा निवेशने विन्यासे लोलश्चपल व्यग्रचित्तस्तम् । ६

बन्दिवेषधरवेदचतुष्टयविहितविजयगुणगाथम् ।
कनकरत्नमयपाणिविशेषकृताखिललोकसनाथम् ॥ ७

पुन किम्भूतम्—बन्दिवेषधरा ये वेदास्तेषा यच्चतुष्टय तेन विहिता आपादिता विजयगुणगाथा यस्य तम्। पुन किम्भूतम्—कनकरत्नाना प्राचुर्य ययोस्तौ कनकमयौ एवविधौ यौ पाणी ताभ्या विशेषेण कृता अखिलाश्च ये लोकाम्ते सनाथा ऐश्वर्यवन्तो येन तम् । ७

श्रीजयदेवविनिर्मितमतिशयरघुपतिचरितमनूपम् ।
हरिचरणस्य तनोतु शिव हृदि मानसहससरूपम् ॥ ८

अनूप निरुपम श्रीजयदेवविनिर्मितम् । अतिशेतेऽसौ अतिशय अवाङ्मनोगोचरो यो रघुपतिस्तस्य चरित यस्मिन् तदिति । अतिशयरघुपतिचरितम् । एवविधमिद गीत हृदि हरिचरणस्य शिव मानसहससरूप तनोतु विपुलीकरोतु । मानसो यो हसस्तस्य समान यद् रूप तत् । ८

इति गीत त्रयोविंशम् ।

निजसरसिजनेत्रै पावयित्वा समस्त,
निजनिकरमुनीन्द्रैर्जानकीपूर्णपार्श्व. ।
रघुपतिरथ शेते तल्पमध्ये मनोज्ञे,
विशदरुचिरवर्णे स्वर्णसौधे सुखेन ॥ ८

अथाऽनन्तरम् । रघुपति निजानि स्वकीयानि यानि सरसिजनेत्राणि तैस्तथा। निजनिकरमुनीन्द्रै निजा स्वकीयाश्च ये निकरा समूहास्तै सहिता ये मुनीन्द्रास्तै समस्त जगत् पावयित्वा विशदरुचिरवर्णे स्वर्णसौधे मनोज्ञे तल्पमध्ये सुखेन शेते स्म । अत्र स्मयोगे लट् । तथेति शेष. । २

प्रात काले वैतालिका —

प्रात काले प्रभातसमये त वैतालिका प्रबोधयामासु । अत्र त प्रबोधयामासुरिति शेष ।

अथ गीत चतुर्विशंम् ।

तदेव भैरवीरागेण यतितालेन जहिहीत्यादिना गीतेनोच्यते—

जहिहि शयनमरविन्दविलोचन ! खगकेतो !।
करुणापूरितशुभनयनेन विलोकय मङ्गलहेतो ! ।। १ ध्रुवपदम्

हे अरविन्दविलोचन ! हे खगकेतो ! हे गरुडध्वज ! 'ग्रहभेदे ध्वजे केतु ' इत्यमर । शयन शय्या जहिहि त्यज । अथ हे मङ्गलहेतो ! करुणया दयया पूरित पूर्णं च यत् शुभ नयन लोचन तेन विलोकय पश्य । १

उदयति भानुरय विधुना सममेति समस्ततमिस्रम् ।
दधति नभोऽरुणतामरुणेन वभूव सदोजसमिश्रम् ।। २

हे अरविन्दविलोचन ! विधुना चन्द्रमसा सम सार्द्ध समस्तस्य जगत तमिस्र तिमिरम् एति गच्छति, अय भानु उदयति । अन्यत् किं च— नभ अरुणेन रविसारथिना अरुणतामारक्तता दधति बिभर्ति । 'दध—धारणे ।' किंच—नभ सदोजसमिश्र बभूव सत्तेजस्विता प्राप्नोत् ओज एव ओजस सच्च तत् ओजस सदोजस तेन मिश्र मिलितम् । 'ओजस्तेज प्रतापोऽस्त्री' इत्यमर । 'मिश्र—सम्पर्के ।' मिश्र्यत इति मिश्रम् ।

विकसति पद्मवन सकल विहगावलिदातिनिनादम् ।
हसविरावविबोधितचक्रनिचयगतसर्वविषादम् ।। ३

हे अरविन्दनयन ! सकल पद्मवन विकसति विकास प्राप्नोति । किम्भूत पद्मवनम्—विहगाना पक्षिणा या आवलि पक्ति सा एव दा रक्षिका तस्या अतिनिनादो यत्र तत् । 'निनादो निनद क्वाणो वाक्य वचनमेव च' इति कोशात् । 'दो दाने पूजने क्षीणे दानशौण्डे च पालके' इत्यक्षरनाममालिकायाम् । अस्यायमर्थ —यथोपवनपालको य कश्चिद्भवति स स्वकीयोपवनशोभातिशय स्वामिनो दर्शयितुकामनया शुकादिभ्यस्तद्रक्षा विदधत्प्रातरुत्थाय निनदति तथैव विहगावलिरपि स्वपद्मवन भ्रमरगजादिभ्यो रक्षन्निव तच्छोभा भवद्दर्शयितुकामेव सती निनदतीति । पुन किम्भूतम्— हसाना यो विरावस्तेन विबोधित प्रबुद्धो यश्चक्रनिचय चक्रवाकसमूह स गतसर्वविषादो विगतस्त्रीवियोगदु खो यत्र तत् । 'विरावो ध्वनिशब्दे स्यात्पक्षिशब्दे महाध्वनौ' इति कोशात् । ३

दीपशिखाऽतिविशुद्धतरा मलिनत्वमुपैति विशाला ।
सीदति कुमुदमुलूकतति प्रतिगच्छति लयमुडुमाला ।। ४

हे अरविन्दनयन ! अतिविशुद्धतरा विशाला शोभमाना दीपशिखा मलिनत्व म्लानताम् उपैति प्राप्नोति । कुमुदम् उलूकततिश्च सीदति अवसाद प्राप्नोति । 'कैरव गन्धकान्त च गर्दभ कुमुद कुमुत्' इति माधव । उलूका रात्रिचरपक्षिविशेषास्तेषा तति समूह । उडूना ताराणा माला पक्ति लयम् अदर्शन प्रति गच्छत्युपैति । ४

कर्षति शृखलक गजता युगभागविभाजितनिद्रा ।
नमति महीपसभाऽभिमुख तव राघव ! दूरदरिद्रा ।। ५

हे राघव ! गजाना हस्तिना समूहो गजता गजसमूह शृखलकमालान कर्षति । किम्भूता गजता -युगभागाभ्यामुभयपार्श्वाभ्या विभाजिता दूरीकृता विभुज्य परित्यक्ता निद्रा यया सा । 'भाज —पृथक्कर्मणि' व्यभाजीति विभाजिता । हे राघव ! महीपाना सभा तवाऽभिमुख त्वत्सम्मुख यथा स्यात्तथा नमति नमस्करोति । किम्भूता महीपसभा—दूरे दरिद्र दुर्गतिर्यस्या सा । ५

गायति सामखिलामखिलामृषिराजिरखण्डितवीणा ।
नृत्यति देववधू रुचिरायुतभावभरेण नवीणा ।। ६

ऋषिराजि साम्न खिला सामखिला ता सामखिला सामवेदर्च गायति । किम्भूता सामखिलाम्—अखिलाम् उदात्तादियथोचितोच्चारतालस्वरसमग्राम् । 'खिल खण्डे ऋचि प्रोक्त ब्रह्मनिर्वाणकर्मसु' इति विश्व । किम्भूता ऋषिराजि—अखण्डिता षड्जादिस्वरमूर्च्छनादिभि परिपूर्णा वीणा यस्या सा । रुचिरा मनोहरा देववधूर्नृत्यति नर्तने वर्तमानाऽस्ति । किम्भूता देववधू—अयुता असख्याताश्च ये भावास्तेषा यो भर समूहस्तेनोपलक्षिता नेय वारवधूर्देवाङ्गनेयमिति परिज्ञाता । पुन किम्भूता देववधू—नवीणा । 'वी—गतौ' इत्यस्मात् 'रास्नादय' इति नक्प्रत्यये निपातात्सिद्धि । ६

शीतलमन्दसुगन्धसमीरगलितकुसुमाऽऽवलिरेखा ।
पठति परस्परमेव पटु श्रुतिपाठमवारितवेषा ।। ७

शीतलो मन्द सुगन्धो य समीर पवनस्तेन गलितानि यानि कुसुमानि पुष्पाणि तेषा या आवलि पक्ति तस्या रेखा । मुखाग्ररोमदण्डो यस्या सा शीतलमन्दसुगन्धसमीरगलितकुसुमाऽऽवलिरेखा । भ्रमरागणा परस्परम् अन्योऽन्य यथा स्यात्तथा श्रुतिपाठ पठति वेदपाठ करोति । किम्भूता—अवारित अतिस्पष्ट वेषो यस्या सा । पुन किम्भूता—पटु तत्पठने प्रवीणा । अनेनेयमपि काचिद्देवागनास्ति भवद्दर्शनार्थमेवागताऽस्ति अत एना स्वात्मान दर्शयस्वेति सूचितम् । 'रेखा सूक्ष्मतरे पक्तौ रेखा रोमाग्रदण्डके' इति हलायुध । ७

श्रीकविराजशिरोमणिदामलसज्जयदेवविगीतम् ।
मोदभर सुजनस्य तनोतु करोतु मनो रसनीतम् ।। ८

श्रिया युक्ताश्च ये कविराजा श्रीकविराजा तेषा मध्ये ये शिरोमणय तेषा यद्दाममाला तत्र लसन् देदीप्यमानो यो जयदेवस्तस्य विशिष्ट यद्गीत तत् सुज-

नम्य सुपुरुषस्य मोदभर परमानन्दभाव तनोतु विस्तारयतु । 'डुभृञ्—धारणपोषणयो' 'स्वराद' भ्रियते इति भर । पुन मन रसनीत भक्तिरसप्रवृत्त करोतु । 'इण्–गतौ ।' नितराम् इत प्राप्त नीत, रस नीत रसनीतम् । ८

इति गीत चतुर्विशम् ।

इदानी प्रारब्धैतद्ग्रन्थान्ते सम्प्रवृत्ताऽखण्डानन्दमय श्रीजयदेव स्वे हृद्युज्जिहान भगवन्त श्रीमद्रामचन्द्र पुर स्थित मत्वा प्रणमति—

य ध्यात्वा सकृदेव देवमुनयो गच्छन्ति सायुज्यक,
मोक्षस्तोत्रमुपैति यत्र वचन सकीर्त्यमान सताम् ॥
यन्नामस्मरणान्नरोऽखिलमघ तीर्त्वा विशुद्धो भवे-
त्त देव प्रणमामि नित्यममल सूक्ष्म प्रकृत्या परम् ॥ ३

देवाश्च मुनयश्च ते देवमुनय य श्रीरामचन्द्र सकृदेव ध्यात्वा सायुज्यक गच्छन्ति । यत्र यस्मिन् श्रीरामचन्द्रे सकीर्त्यमान प्रोच्यमान वचन सता तत्र विद्यमानपुसा मोक्षस्तोत्रम् उपैति मोक्षकरणस्तुति प्राप्नोति, मोक्षस्य करण च तत्स्तोत्र मोक्षस्तोत्रम् । अनेन य श्रीमद्रामगुणानुवाद शृणोति सोऽपि न पुन ससरति वक्तुस्तु किमुतेति सूचितम् । यन्नामस्मरणात् नर अखिलम् अघ तीर्त्वा विशुद्धो भवेत् त देव श्रीरामचन्द्र प्रणमामि । किम्भूतम्–नित्यमनश्वरम् । पुन किम्भूतम्–अमल निरञ्जनम् । पुन किम्भूतम्–सूक्ष्ममणीयासम् । पुन किम्भूतम्—प्रकृत्या पर मायात परीभूतम् । ३

श्रीमद्विदेहनृपदेशविशेषवासो,
नि शेषभूमिपतिमण्डलमाननीय ।
एतच्चकार वरगानरसप्रधान,
काव्य कविप्रकरमौलिविभूषण सत् ॥ ४

श्रीमान् य विदेहनृपस्तस्य यो देशविशेषस्तस्मिन् वासो यस्य स । नि शेषा समस्ताश्च य भूमिपतयस्तेषा मण्डलेषु राष्ट्रमण्डलेषु माननीय

मानार्हे । एवं विध श्रीजयदेव एतत् वरगानरसप्रधान काव्य चकार कृतवान् । किम्भूत काव्यम्—कविप्रकरमौलिविभूषणम्, कवीना ये प्रकरा समूहास्तेषा मौलिविभूषण शिरोभूषण शिरोमणिरिव भवतीति तत् । पुन किम्भूत काव्यम्—सत् समीचीन काव्यदोषरहितमित्यर्थ । यद्वा—सत् त्रिष्वपि कालेषु सत्य रामचरितत्वात्तन्नाशापत्त्यभावात् । इति । ४

अथ शिरोमणित्वमेव विवृण्वन् प्रारब्धस्वीयग्रन्थाख्याप्रतिपादन करोति—

श्रीमद्रामायणक्षीरसागरान्मन्दरोपम ।
जयदेवो रामगीतगोविन्द रत्नमाकरोत् ।। ५

•

इति श्रीमद्रामगीतगोविन्दे महाकाव्ये
श्रीजयदेवकृतौ रामाभिषेको,
नाम षष्ठ सर्ग ।। ६

•

श्रीमच्च तद्रामायण तदेव क्षीरसागरो रत्नाकरस्तस्मात्, मन्दरोपम मन्दराचलसदृशो जयदेव रत्नमिव भवतीति रत्न रत्नसदृश रामगीतगोविन्दम् आकरोदाकार्षीत् नवनीतवदाकृष्य प्रादुश्चकारेत्यर्थ । रमन्ते योगिनोऽस्मिन्निति राम राम गीत प्रीत्याभिवर्णितो यासु ता रामगीताश्च या गाव रामगीतगाव वाल्मीक्यादिवाचस्तासा यो विन्दो लाभ स यस्य तत् रामगीतगोविन्दम् । ५

एतच्छ्रीमद्रामगीतगोविन्दार्थविवर्णनम् ।
हनुमानकरोच्छ्रीमत्त्रिपाठी वत्सवशज ।।

इति श्रीमद्रामगीतगोविन्दार्थविवणने षष्ठ सर्ग । ६
समाप्त चेद सटीक रामगीतगोविन्दनाम
महाकाव्यम् ।

•

## रामगीतगोविन्दस्थपद्यानामकाराद्यनुक्रमणिका

● ● ●

# टीकायां निर्दिष्टानि ग्रन्थनामानि





## समागतवृत्त-लक्षणानि



अनुष्टुप्— श्लोके षष्ठ गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् ।
द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययो ॥
१/६, ८, ६, ११, १६। २/१—४, ६, ८—१० ।
३/१, ३ । ४/६ । ५/३ । ६/१, ५ ।

वसन्ततिलका— उक्ता वसन्ततिलका तभजा जगौ ग ।
१/१, २, ३, ५ । २/१६ । ३/७, १२ । ५/४, ८ । ६/४ ।

वैतालीयम्— षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तरा ।
न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरु ॥
१/४, १२ । ४/४ । ५/१ ।

स्रग्धरा— म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।
१/७ ।

उपेन्द्रवज्रा— उपेन्द्रवज्रा जतजास्ततो गौ ।
१/१० । ५/५

उपजाति स्यादिन्द्रवज्रा यदि तौ जगौ ग , उपेन्द्रवज्रा जतजास्ततो गौ ।
अनन्तरोदीरितलक्ष्मभाजौ, पादौ यदीयावुपजातयस्ता ।
इत्थं किलान्यास्वपि मिश्रितासु,वदन्ति जातिष्विदमेव नाम ।

१/१३ । ३/६ ।

वशस्थम्— जतौ तु वंशस्थमुदीरितं जरौ।
१/१४।

शिखरिणी— रसै रुद्रैश्छिन्ना यमनसभला ग शिखरिणी।
१/१५, १८।

शार्दूलविक्रीडितम्—सूर्याश्वैर्यदि म सजौ सततगा शार्दूलविक्रीडितम्।
१/२०। २/१२, १५। /३/६, १३, १४। ४/६।
५/२। ६/३।

द्रुतविलम्बितम्— द्रुतविलम्बितमाह नभौ भरौ।
२/५। ३/२, ४।

रथोद्धता— रान्नराविह रथोद्धता लगौ।
२/७। ३/८। ४/२।

पुष्पिताग्रा— अयुजि नयुगरेफतो यकारो,
युजि च नजौ जरगाश्च पुष्पिताग्रा।
२/११।

मालिनी— ननमयययुतेय मालिनी भोगिलोकै।
२/१३। ६/२।

पथ्यावक्त्रम्— युजोश्च चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितम्।
३/१०, ११। ४/१, ३।

प्रहर्षिणी— त्र्याशाभिर्मनजरगा प्रहर्षिणीयम्।
४/७।

# टीकाया विशिष्टशब्दव्युत्पत्तिः

पृष्ठाङ्क.

| | |
|---|---|
| ३—रामायणम् | रमन्ते क्रीडन्ति योगिनोऽस्मिन्निति रामोऽखण्डानन्दमयब्रह्म तस्यायो निश्चय इति रामाय तं नयति प्रापयतीति रामायणम्। यद्वा रामस्य श्रीरामचन्द्रस्यऽयन रामायणम्। |
| ४—राम | रामयत्याह्लादयतीति राम । रमन्ते योगिनोऽस्मिन्निति राम । |
| ४-श्रीजयदेवनिर्मितम् | श्रीश्च जयश्च ताभ्या सहितश्चासौ देव श्रीजयदेव रामचन्द्रस्तत्प्रीतये निर्मितम्। |
| २३—अतिभारम् | अतिक्रान्त भारो येन तदतिभारं भारहरम्। अतिशया चासौ भा ता राति ददातीति तत्। |
| २७- सिरतारका | सिन्वन्ति बध्नन्ति युञ्जन्तीति सिरा रामे बद्धदृष्टयस्तारका येषा ते। |
| ४३—रामदेव | रमन्ते युद्धाजिरे क्रीडन्तीति रामा मारीचविराधेन्द्रजिद्रावणादयस्तान्दीव्यतीति विजगीषतीति रामदेव श्रीरामचन्द्र । |
| ४७—ए ! | 'अ शिवे केशवे वायौ' इत्यक्षरमालिकायाम्। अ एव इ इति रूप भवति तत्सम्बुद्धो हे ए! इति साधु । |
| ४७- रघुवरम् | रघूणा मध्ये वरस्तम्। यद्वा-रघवो वर येन तम्। |

यद्वा–रङ् (लङ्) घन्ते रागादीनतिक्रम्य त्वाम-नुवर्तन्त इति रघवस्त्वद्भक्तास्ते वरा यस्य तम्।

| | |
|---|---|
| ५१–अनूपमम् | अनुगता उप समीपे मा सीता यस्येति तत्। यद्वा–अनुगता पश्चात् गता विमुखा उपमा यस्मिंस्तत्। |
| ५३– -अपक्षपक्षकरम् | न कश्चन पक्षो येषा ते अपक्षा आत्मारामा। यद्वा–अपक्षा पक्षशून्या तेषा पक्षकर तद्विपक्षो-न्मूलम्। |
| ५७—रामम् | रमन्ते योगिनोऽस्मिन्निति रामं योगिना नियत-स्थानम्। |
| ६०—समय | समीयते निश्चीयते जनैरिति समय। |
| ७२—वनदेवीसम् | अस्य विष्णोरपत्यम् इ काम। 'षोऽन्त कर्मणि' वनदेवीनाम् इं कामं स्यति समापयति पूरय-तीति तत् |
| ७३—विनीतम् | 'ई-गतौ' नि अतिशयेन ईयते गम्यते इति नीति विचित्रा नीतिर्गति यस्मिन्निति तत् विनीतम्। |
| ७३—अनिशम् | न अन्यत् नितरा शं यस्मादिति अनिशो मोक्षस्तम्। |
| ७६—अनूपम् | अनुगता पश्चाद् गता न पुरो भवित्री उपा उपमा यस्य तत् अनूपम्। अत्र नामैकदेशे नामग्रहणं यथा–'भीमो भीमसेन' इति तद्वत् 'ब्भ्य' इति सूत्रनिर्देशात्। |
| ८२—अनुमानम् | अनुगत विमुखोभूत मानोऽहम्भावो यस्मात्तम् गताभिमानमित्यर्थ। यद्वा–मन्यते ज्ञायत |

इति मानम् अनु पश्चात् गतिर्यस्येत्यनुगतम्
अनुगतम् अनुगीभूतम् मान ज्ञान यस्य तम् ।

| | |
|---|---|
| १०४—रसनीतम् | रसनीतं भक्तिरसप्रवृत्त करोतु । 'इण् गतौ' । नितराम् इतं प्राप्त नीतं रसं नीतं रसनीतम् । |
| १०५—रामगीतगोविन्दम् | रमन्ते योगिनोऽस्मिन्निति राम, राम गीत प्रीत्याभिवर्णितो यासु ता रामगीताश्च या गाव रामगीतगाव वाल्मीक्यादिवाचस्तासा यो विन्द लाभ स यस्य तत् रामगीत-गोविन्दम् । |



# टीकोद्धृतसारस्वत-व्याकरण-सूत्रसूची

| पृष्ठानि | सूत्राणि |
|---|---|
| ५ | आतो ड |
| ६ | ब्भ्य |
| १३ | घञर्थे क |
| १५ | धाञो हि किति ते |
| १७ | दृशादे श |
| ,, | दिवादेर्य |
| ,, | य्यो |
| १८ | घञ् भावे |
| २० | बपादेरिञ् |
| २७ | स्फायादेरक् |
| ४२ | प्रशसाया रूप |
| ४७ | स्वार्थेऽपि |
| ,, | यस्य लोप |
| ५५ | ज्वलादेर्ण |
| ६० | पचादे र |
| ६६ | नाम्नि च |
| ६७ | ऋते आदि योगे पञ्चमी |
| ७२ | टाडका |
| ७९ | मूलविभुजादे क |
| १०३ | रास्नादय |
| १०४ | स्वरादे |

# जयदेव–विषयिणी जनश्रुतिः

शङ्कराचार्यकृतमोहमुद्गरे पुरावृत्त यथा—कदाचिदटव्यामटमानो जयदेवो दस्युभिर्लूनपाणिपाद कूपे क्षिप्तस्ततोऽनेकजन्मपरिचितपुण्यातिशयात्तादृक्पुण्य-शालिभूमिस्पर्शनाच्चैवाष्टव्याकरणविभूषितदन्तप्रदेशा जिह्वाग्रवर्तिकाणादगौतम-वैशेषिककृतरचनाविशेषा भगवती जयदेवहृदये जिह्वाया च प्रादुरासीत् । ततोऽनेक-जन्मकृतकृष्णसेवनपरिपाकविपाकेन कृष्णगुणवर्णनप्रधान गीतगोविन्दमातनोति स्म । अथ कदाचिज्जलार्थ भ्रमद्भि कैश्चिल्लूनपाणिपादो जयदेवो दृष्ट । यत्नान्नि-सारितोऽपि ततो विद्याविनोदशीलोऽयमनेककार्याकार्यविवेकविशिष्टोऽय नियत-कर्मकर्तृकोऽयमत्यद्भुतोऽयमिति विद्वद्भिर्नृपतिं प्रति विज्ञापित आसीत्। नृपतिश्च शिबिकामारुह्य तत्र गतस्ततोऽन्यस्या शिबिकायामारोह्य तमानीतवान् । अथ तत्रातिविशिष्टविद्याभ्यासचातुर्यमवगम्य महति द्रव्याधिकारे दानाध्यक्षकर्मणि नियुक्तोऽथ तदङ्गलाविनोऽयमस्मान् घातयिष्यत्यतो वयमेवैन घातयाम इति कृत-सन्धयो यदृच्छातस्तत्रागतास्तेऽपि च राज्ञाधिकृता । अथ सभाया कदाचिदेष जयदेवोऽतिबुद्धिशाली देवाचार्य इव दृश्यत इति नृपवच शृण्वन्तोऽपि त ऊचु-रयमतिदुष्कर्माऽस्माभिरेव निष्कासित । पुरा मार्गघ्नो दस्युराडयम् अत एव केन-चिन्नृपतिनेदृग्गतिमापन्नोऽस्त्यतो मारणीयोऽयमन्यथा राज्यभङ्ग करिष्यति । इति शृण्वन्सन्दिग्धो राजाऽनेकधा परीक्ष्याथ तत्समक्षमेवापृच्छद् भो जयदेव! के तव गुरव कथ त्वयेदृग्गुणो लब्ध इति निगदितो जयदेव उवाच—राजन्नमी भवत्-पार्श्वगा एवास्मद्गुरव एभ्य एव सर्व लब्धम् । इति शृण्वन्तोऽपि त ऊचुर्नृप !नाऽय सत्यवाक् । अय निगदनेनापि मित्राणीव शत्रूदासीनानपि वशमानेतुमलम् । झटिति हन्योऽस्त्वन्यथा राज्यभङ्ग करिष्यति । अथैतदसहमानेय भूर्दीर्णा तद्विवरेणापि तदधोगतिरासीदथ पूर्वतोऽप्यतिविशिष्टपाणिपादविद्यावैभवशीलगुण आसी-ज्जयदेव इति ।

[अस्य टीकाकारेण टीकाया समुद्धृता]

## गुर्जरीराग

**अस्य लक्षणम्**

ग्रहांशन्याससरि पूर्णा प्रातर्गेया तु सुन्दरी ।
बहुली मिश्रिता नित्य षड्जहीना क्वचिद् भवेत् ।।

**'रसकौमुद्याम्'**

**अस्य ध्यानम्**

इन्दीवर श्यामतनु सुकेशी,
पाटीरपत्रावलिचारुतल्पा ?
श्रुतिस्वरव्यूहविभागरम्या,
तन्त्रीमुखान् ? मञ्जुलगुर्जरीयम् ।।

**'रसकौमुद्याम्'**

## आसावरीराग

**अस्य लक्षणम्**

गौरीमेलसमुत्पन्नाऽऽरोहणे गनिर्वर्जिता ।
मध्यमोद्ग्राहधांशाद्याऽऽसावरी न्यासपञ्चमा ।।

**'रसकौमुद्याम्'**

मन्त्रिकाऽऽसावरीपूर्णा, सदा गेयातिकारुणा ।

**'हृदयप्रकाशे'**

गान्धारश्च निषादश्च, यत्र तीव्रतरौ कृतौ
निशून्यारोहणामादि सम्पूर्णाऽऽसासावरी मता ।

**'रागचन्द्रिकायाम्'**

## रामकरीराग

अस्य रागस्य विभिन्नसगीतग्रन्थेषु रामगिरिरामकरीरामकलीराम-क्रुतिनामान्तर दरीदृश्यते ।

**अस्य लक्षणम्**

रिकोमला गतीव्रा या मतीव्रतरसयुता ।
धकोमला नितीव्रा च ख्याता रामकरीति सा ।
आरोहे मनिवर्जा स्यात् पाशा धैवनमूर्च्छना ॥

**'सगीतपारिजाते'**

धत्ते श्यामलकचुकी च गलके मुक्तावलीमशुकम्,
शोणाभ वरककणानि करयो पादद्वये नुपुरौ ।
चन्द्रास्या मदविह्वला सकरुणा भाषा भृश भाषती,
चैपा रामगिरी दिनान्तसमये रामेण गीत पुरा ॥

**'रागमालायाम'**

## देशवराडीराग

**अस्य लक्षणम्**

आरब्धगमनमुद्रा, निद्राघूर्णायमाननयनयुगा ।
सुखशायिनि निजदयिते, देशवराडी भवेद् गौरी ॥

## देशाख्यराग

**अस्य लक्षणम्**

रितीव्रतरसयुक्तो गतीव्रेणाऽपि सयुत ।
धगवर्ज्योऽवरोहे स्याद् गान्धारस्वरमूर्च्छन ।
तीव्रो यत्र निषाद स्याद् देशाख्य स विराजते ॥

**'सगीतपरिजाते'**

**अस्य ध्यानम्**

पृथुलतरशरीरो मल्लविद्यासुदक्ष ,
परमवलवरिष्ठो बाहुदण्डप्रचण्ड ।

अतिशयदृढकक्षो मूर्द्धचूडाविहीन ,
प्रचरति नृपशालानेपदेशाख्यराग ।।

'सगीतकल्पद्रुमाङकुरे'

## देशराग

देशनामको रागो न वर्तते । देसस्यैव नामान्तर प्रतिभाति ।

**अस्य लक्षणम्**

रागो देस पचमाशोर्यमात्य ,
सपूर्णोऽय सोरटीतुल्य एँव ।
किञ्चिद्भेदाच्चावरोहे रिवक्रो,
रात्रौ यामादुत्तर गीयतेऽसौ ।

'रागकल्पद्रुमाङ्कुरे'

पाश्शो ऋषभसवादी, सोरटीतुल्यरूपक ।
रिवक्रो देसरागश्च, द्वितीये प्रहरे निशि ।।

'रागचन्द्रिकायाम्'

सरी मपौ निधौ पश्च पधौ पमौ गरी गसौ ।
सोरटीतुल्यरूपोऽसौ देसाख्यो त्र्यशको निशि ।।

'अभिनवरागमञ्जर्याम्'

## भैरवीराग

**अस्य लक्षणम्**

आभान्त्यस्या रिगमधनय कोमला मोऽत्रवादी,
स सवादी क्वचिदपि धगौ वादिसवादिनौ च ।

प्रातर्गेया सुरुचिरतरा स्वैरिणी सर्वगम्या,
सपूर्णा सा जनयति सुख भैरवी रागिणीयम् ॥

**'रागकल्पद्रुमाङ्कुरे'**

यत्र म०्य स्वरो वादी सवादी षड्ज ईरित ।
स्वैरिणी गीयते प्रातर्भैरवी सर्वकोमला

**'रागचन्द्रिकायाम्'**

निसौ गमो पधौ निश्च सनीधपा मगौ रिसौ ।
सपूर्णा भैरवी प्रोक्ता धैवताशा प्रभातगा ॥

**'अभिनवरागमञ्जर्याम्'**

सरोवरस्थे स्फटिकस्य मण्डपे सरोरुहे शङ्करमर्चयन्ती ।
तालप्रभेदा प्रतिपन्नगीता गोरीतनुर्नाम हि भैरवीयम् ॥